हिक्कायाः पार्श्वयोर्लग्ने जत्रुणी[1] भुजमूर्ध्वगे[2] ( मूर्धगे )।
एकादशाङ्गुले प्रोक्ते किञ्चिदुन्नतविग्रहे ॥ २८८ ॥

हिक्कायाः कक्षमूलाच्च स्तनचूचुकबन्धुतः[3] ।
मध्ये[4] वक्षःस्थलं प्रोक्तं तालमात्रं[5] समंततः ॥ २८९ ॥

द्वयोश्चू[6]चुकयोर्मध्ये तालमानमुदाहृतम् ।
कार्यं चूचुकयोर्वृत्तं मेचकं द्व्यङ्गुलं[7] भवेत् ॥ २९० ॥

चू[8]चुको मण्डलस्यान्तर्य[9]वमात्रो निगद्यते ।
उत्सेधाद्विस्तृते[10]स्तद्वत्प्रमाणं परिकीर्तितम् ॥ २९१ ॥

स्त्रीणां तु द्वियवः कार्यश्चूचुकश्चित्रकोविदैः ।
प्रोक्त(:)स्त[11]नपरीणाहः[12] स्तनमष्टादशाङ्गुलम् ॥ २९२ ॥

बृहतीनामतः ख्यातं कक्षमूल[13]स्तनान्तरम् ।
षडङ्गुलं च मानेन सूत्रितं सूत्रकोविदैः ॥ २९३ ॥

स्तनद्वितयमध्यस्थः किञ्चिन्निम्न[14]ः कलामितः ।
प्रदेशे[15] (शो) बन्धु[16]रित्युक्तश्चित्रशास्त्रविशारदैः ॥ २९४ ॥

कन्धरास्कन्धसन्धिस्तु बाहुमूर्धनि भागकः ।
पूर्वापरे कक्षमूले मू(ता)लेनैकेन सम्मिते ॥ २९५ ॥

अभ्यन्तरे तथैव स्यात् ताल एको निरूपितः ।
कक्षमूले[17]परीणाहस्तदेव(वं)स्याद्वितालकः ॥ २९६ ॥

बाहुशीर्षस्य[18] बाहोश्च सन्धिस्थानं निरूपितम् ।
कक्ष[19]मूलात्कला[20]द्वन्द्वं तिर्यक्सूत्रप्रमाणतः ॥ २९७ ॥

बन्धु[21]देशाद् भवेन्ना[22]भिस्तालेनैकेन मापिता ।
नाभिरङ्गुलविस्तारा वर्तुला[23]र्धाङ्गुला[24]वटा ॥ २९८ ॥

---

१ D तृ । २ F र्द्धते । ३ B. F ता । ४ B. D. F. ध्यं । ५ A त्र । ६ A श्चिबु । ७ A द्विगुणं । ८ A चिबु । ९ A न्तं पञ्चमात्रा । १० A त । ११ A क्त स्था । । १२ A ह । १३ D. लं ; १४ D. न्न । १५ A. वे । १६ A. न्ध । १७ B. D. ले । १८ B. D. श्च । १९ F. क्षा । २० B. D. क्ष । २१ B न्ध । २२ A. त्ता । २३ A. द्वय । २४ A लोचय । B. D. ला च या ।

बन्धस्य[1] पार्श्वयोस्तिर्यग्विस्तारस्तु द्विभागिकः ।
चतुर्यवसमोपेतस्त्वेवं सप्तदशाङ्गुलैः[2] ॥ २९९ ॥

बन्धुदेशे[3]परीणाह एकं[4]पञ्चाशदङ्गुलैः[5] ।
ततो[6]ऽधो मध्यभागस्तु प्रोक्तो मनुमिताङ्गुलः ॥ ३०० ॥

मध्यभागपरीणाहो[7] द्विचत्वारिंशदङ्गुलः ।
नाभिदेशस्य विस्तारो भवेच्चन्द्रकलाङ्गुलः ॥ ३०१ ॥

नाभिस्थाने परीणाहो भवेत्तालचतुष्टयम् ।
श्रोणीदेशः स विख्यातः कायस्थानपरीक्षकैः ॥ ३०२ ॥

पक्वाशयगते सूत्रे विस्तारोऽष्टादशाङ्गुलः ।
पक्वाशयपरीणाहश्चतुष्पञ्चाशदङ्गुलः ॥ ३०३ ॥

स प्रदेशः कटिर्नाम काञ्चीदामविधारकः ।
स्त्रीणां चेदधिकः कार्यो भागेनैकेन कर्तृभिः ॥ ३०४ ॥

वस्तिमस्तकसूत्रस्य सप्तपञ्चांशदङ्गुलः ।
परीणाहो[10] विधातव्यः सूचीभागेन विस्तृतैः[11] ॥ ३०५ ॥

बस्ते[12]स्थानस्य विस्तारो विंशत्यङ्गुलसम्मितः ।
तस्य प्रोक्तः परीणाहः षष्ठ्य[13]ङ्गुलमितो बुधैः ॥ ३०६ ॥

जठरं वक्षसा युक्तं कार्यं गोमुखसन्निभम् ।
स्त्रीणां मध्ये[14] कृशं कार्यं नाहेन[15] त्रिंशदङ्गुलम् ॥ ३०७ ॥

भागेनैकेन तस्याधो लिङ्गमूलं प्रकल्पयेत् ।
पञ्चाङ्गुलं लिङ्गदैर्घ्यं मुष्कयोश्चतुरङ्गुलम् ॥ ३०८ ॥

लिङ्गस्य[16] मूलविस्तारः कलामात्रो निगद्यते ।
पार्श्वयोरुभयोस्तस्य मुष्कमूलं द्विमात्रिकम् ॥ ३०९ ॥

एवं च लिङ्गमुष्क[17]स्य मूलं स्याच्चतुरङ्गुलम् ।
मूलोपान्ते प्रकर्तव्ये द्वे रेखे वंक्षणाश्रिते[18] ॥ ३१० ॥

---

१ A. बाध । २ A लम् F. ला । ३ A शे । ४ B कं । A । ५ A कःपञ्चदशाङ्गुलः B. कं पञ्चदशाङ्गुलं । ६ B था । ७ D हः । ८ A दशाङ्गुलल: D. द्दशाङ्गुलः, । ९ B. D. ञ्च दशा । १० A मो । B. D. तिः । १२ A. विस्तिस्तस्य च D. वस्तेश्च स्थान । १३ A ङ । १४ A ध्यं । १५ AF. १६ A मूलस्य । १७ A ष्यस्य । १८ A स्तृ ।

विनिर्गते कलामात्रे तयोर्मध्यं वि(द्वि)भागिकम्[1] ।
रेखयोः प्रान्ततो[2] बस्तेर्विस्तारः स्यात् षडङ्गुलः ॥ ३११ ॥

भाग एको लिङ्गदैर्घ्यं मणिरेकाङ्गुलस्ततः ।
षडङ्गुलैः[3] परीणाहो मणिमूलेऽधिको मनाक्[4] ॥ ३१२ ॥

मुष्कयोर्भागिकं दैर्घ्यं तदर्धं बीजसंयुतम् ।
त्वगेव मूलभागः स्यात् तन्निम्नांशा[5] प्रकल्प(ल्प्य)ते[6] ॥ ३१३ ॥

मुष्कौ सबीजकौ वृत्तौ भागद्वयविभागितौ ।
तालमात्रपरीणाहौ कर्तव्यौ शिल्पकोविदैः ॥ ३१४ ॥

अधस्तान्नीतसूत्रस्य लग्ने स्यातां कुकुन्दरे[7] ।
पश्चाद्भागे प्रकर्तव्ये भागद्वयकृतान्तरे ॥ ३१५ ॥

वस्तिमस्तकसूत्रस्य कटिसूत्रस्य चान्तरम् ।
फलकाकृति कर्तव्यं पश्चाद्भागं ( गे ) च शिल्पिभिः ॥ ३१६ ॥

वस्तिमस्तकसूत्राच्च लिङ्गाग्रपरिमाणकैः[8] ।
स्फिजौ चैव विधातव्ये करिकुम्भसहोदरे[9] ॥ ३१७ ॥

स्फिजोरधः परीणाहस्त्रयस्त्रिंशन्मिताङ्गुलः ।
ऊरुमध्यपरीणाहः कार्यः षट्[10]त्रिंशदङ्गुलः ॥ ३१८ ॥

श्रोणी(आणि)देशपरीणाहो भवेत्तालद्वयान्वितः ।
क्रमशो हीयमानौ तावूरू कार्यौ विचक्षणैः ॥ ३१९ ॥

[11]अरोमकौ वलीशून्यौ रम्भास्तम्भकृतोपमौ ।
श्लक्ष्णौ मनोहरौ वृत्तावूरू कार्यौ विचक्षणैः ॥ ३२० ॥

ततस्तु जानुनी कार्ये चतुरङ्गुलमायते ।
अङ्गुलत्रयविस्तारे तत्पार्श्वौ द्विकलौ मतौ ॥ ३२१ ॥

परीणाहो विरच्यः स्यादङ्गुलान्येकविंशतिः ।
पश्चाद्भागे मनाग्निम्ने मध्ये किञ्चित्समुन्नते ॥ ३२२ ॥

---

१ B वितम् D विकम् । २ A योब । ३ F ल । ४ BDF भवेत् । ५ D दिमासा । ६ D येत् । ७ A क । ८ B. F. कैः A. कं । ९ A म । १० A. ड्विं । ११ F omits this stanza. ।

जङ्घामूलपरीणाहो[1] भवेदष्टादशाङ्गुलः।
जङ्घाप्रान्तपरीणाहश्चतुर्दशभिरङ्गुलैः[2] ॥ ३२३ ॥

ततोऽधो गुल्फदेशः स्यान्नाहः[3] स्यात्षोडशाङ्गुलः।
चतुर्दशाङ्गुलं दैर्घ्यं चरणे गणितं बुधैः॥ ३२४ ॥

उच्छ्रायः पार्ष्णिदेशस्य गणितश्चतुरङ्गुलः।
तिर्यक्सूत्रं समं पार्ष्णेर्द्व्यङ्गुलं समुदाहृतम् ॥ ३२५ ॥

पार्ष्णिदेशस्य विस्तारो भवेत्पञ्चभिरङ्गुलैः।
भागमात्रान्तरादूर्ध्वं पार्ष्णितो भागतः पुरः ॥ ३२६ ॥

गुल्फौ द्व्यङ्गुलकौ कार्यौ विस्तारेण समन्ततः।
पादपृष्ठं तु कर्तव्यं प्रोन्नतं गजपृष्ठवत् ॥ ३२७ ॥

तस्याधस्तलदेशस्तु निम्नोऽभ्यन्तरतो भवेत्।
बहिर्भागे समं कार्यं पार्ष्णेर्यावत्कनिष्ठकम् ॥ ३२८ ॥

अङ्गुलं( ष्ठ )मूलदेशे तु तलं कार्यं समुन्नतम्।
पादाग्रतलविस्तारः षडङ्गुल उदाहृतः॥ ३२९ ॥

पार्ष्णेश्च तलविस्तारः कथितश्चतुरङ्गुलः।
पादपृष्ठस्य चोत्सेधो भागस्त्वर्धाङ्गुलाधिकः ॥ ३३० ॥

अग्रपादस्य चोत्सेधस्त्र्यङ्गुलः समुदाहृतः॥
अङ्गुष्ठमूलदेशस्य त्र्यङ्गुलःस्यात्समुच्छ्रयः॥ ३३१ ॥

अङ्गुष्ठस्य समुत्सेधो मात्रास्याद्द्वियवाधिका।
अङ्गुष्ठदैर्घ्यमुद्दिष्टमङ्गुलद्व(त्र)यसम्मितम्[11] ॥ ३३२ ॥

अङ्गुष्ठस्य परीणाहो भवेत्पञ्चभिरङ्गुलैः।
द्विपर्वाङ्गुष्ठमुद्दिष्टं प्रान्तपर्वार्धतो[12] मु(न)खः॥ ३३३ ॥

तर्जनीदैर्ध्यमुद्दिष्टं त्र्यङ्गुलं[13] द्वियवाधिकम्।
अ(त्र्य)ङ्गुलस्तु[14] परीणाहस्तस्याः[15] पर्वत्रयं भवेत् ॥ ३३४ ॥

१ A ह्रौ। २ A. लः। ३ A. ना। ४ B छ्र। ५ B त्रत। ६ D. F. न। ७ D. पार्ष्णि। ८ A. मु। ९ F. गे। १० BD. अ। ११ A. ष्टंत्र्य। १२ F. प्रांतं। १३ BD ष्टम। १४ A स्य। १५ D. स्य।

मध्यमादै[1]र्घ्यमुद्दिष्टं यवो[2] द्वाविंशतिर्बुधैः ।
कनिष्ठादै[3]र्घ्यमाख्यातं सप्तभिर्दशभिर्यवैः ॥ ३३५ ॥

परीणाहस्तु तस्याः स्याद्यवानामेकविंशतिः ।
आयामो[4]ऽनामिकायाश्च यवा विंशतिरिष्यते ॥ ३३६ ॥

अनामिकापरीणाहः कार्योऽष्ट (ष्टा)दशभिर्यवैः ।
कनिष्ठादैर्घ्यमाख्यातं सप्तभिर्दशभिर्यवैः ॥ ३३७ ॥

कनिष्ठायाः परीणाहो यवाः पञ्चदश स्मृताः ।
पर्वत्रयं तु सर्वासामङ्गुलीनां प्रकीर्तितम् ॥ ३३८ ॥

सर्वासां पादशाखानामग्रपर्वार्धतो नखाः ।
अर्धाङ्गुलं समुत्सेधः सर्वासामग्रतो भवेत् ॥ ३३९ ॥

कन्धरास्कन्धसन्धेस्तु पश्चाद्भागे कृकाटिका ।
कृकाटीदेशतः कक्षामूलमेकादशाङ्गुलम् ॥ ३४० ॥

स्कन्धाभ्यां निर्गतौ[5] ( तौ ) वंशफलको[6] (कौ) षट्[7]षडङ्गुलौ ।
तयोर्मध्ये[8] भवेद्वंशः कलामात्रप्रमाणकः ॥ ३४१ ॥

उत्तानकदलीपत्रसन्निभः पृष्ठवंशकः ।
तदेवं पृष्ठभागस्य स्वरूपं परिकीर्तितम् ॥ ३४२ ॥

कक्षायाः कूर्परं यावद्बाहुपर्वेति कथ्यते ।
अष्टादशाङ्गुलं दैर्घ्यमा[10]नाहेऽष्टादशाङ्गुलम् ॥ ३४३ ॥

कूर्परात्तलपर्यन्तं पर्व सप्तदशाङ्गुलम् ।
परीणाहः प्रबाहोस्तु षोडशाङ्गुलसम्मितः ॥ ३४४ ॥

प्रकोष्ठस्य परीणाहश्चतुर्दशभिरङ्गुलैः ।
मणिबन्धपरीणाहः कर्तव्यो द्वादशाङ्गुलः ॥ ३४५ ॥

विस्तारस्त्रिकलो बाहोः कूर्परे[11]ऽङ्गुलपञ्चकम्[12] ।
परीणाहस्त्रि(त्रि)भागेन प्रबाहोर्विस्तृ[13]तिर्मता ॥ ३४६ ॥

---

१ A. B द्दै । २ B. व । ३ A दै । ४ A मे । ५ B D F तो । ६ B काः D कः । ७ A षड्डद । ८ D ध्यं । ९ A न्तः B तः । १० A र्घ्ये मानेऽप्य । ११ A राङ्गु । १२ B कः । १३ F विंस्तति ।

प्रकोष्ठे[1] मणिबन्धे च[2] परिणाहस्त्रि(त्रि)भागतः ।
एवं भुजस्य विस्तारः परीणाहश्च वर्णितः ॥ ३४७ ॥

सप्ताङ्गुलानि पार्ष्णेः स्युर्मध्यमाङ्गुलमूलतः ।
षडङ्गुल(लं)प्रमाणेन[3] ( देशिन्या ) आयामे (अनामेः) सार्धपञ्चकम् ॥३४८॥

कनिष्ठामूलरेखाया भवेदङ्गुलपञ्चकम् ।
इ[4]त्यायामस्तले प्रोक्तः पञ्चमात्रा तु[5] विस्तृतिः ॥ ३४९ ॥

अङ्गुल ( ष्ठ ) मूलरेखायास्तर्जन्याश्च तथैव च ।
मध्यभागप्रमाणं स्यादङ्गुलत्रयसम्मितम् ॥ ३५० ॥

कनिष्ठा[6]मूलरेखाया अधस्तादङ्गुलान्तरे ।
अनामेः[7] कलया मूलान्मध्यायाः[8] सार्द्धमात्रया ॥ ३५१ ॥

आयुर्लेखा भवेत्सा तु किञ्चिदिक्का[9] ( द्वक्रा ) प्रशंस्यते[10] ।
मध्यमातर्जनीमध्यं प्रति[11]ष्ठा[12] सा[13] प्रकल्प्यते[14] ॥ ३५२ ॥

अङ्गुष्ठमूलतर्जन्यो[15]स्त्र्य[16]ङ्गुलान्तरमध्यगा[17] ॥
शक्तिरेखा प्रकल्प्या स्यात्सापि वक्रा[18] मनाग् भवेत् ॥ ३५३ ॥

मध्यमा यंत्र[19] रेखाया गोलकं हि ( कद्वि )यवान्तरे ।
अनामायाः[20] कनिष्ठायाः सा स्यात्त्र्यङ्गुलदूरगा ॥ ३५४ ॥

तलमध्ये भवेदन्या रेखा[21] कार्मुकसन्निभा ।
सु(पुं)रेखा लेखि(ख)नीया सा सङ्गता शक्तिरेखया ॥ ३५५ ॥

कनिष्ठानां[22] मध्यमानां सन्धिः सङ्कोचकारकः[23] ।
आयू[24]रेखा भवेत्तत्र[25] पुरा प्रोक्ता तु या मया ॥ ३५६ ॥

तर्जनीसन्धिदेशे तु शक्तिरेखासमुद्भवः[26] ।
अङ्गुष्ठच(त)लैः[27]सन्धौ तु पुंलेखा[28] संव्यवस्थिता[29] ॥ ३५७ ॥

---

१ A ष्ठ । २ A न । ३ E. F. णो । ४ B D आयामविस्तरः । ५ I। स्तु । ६ A ष्ट । ७ A मे
८ A ग्रध्यायाः D ग्रवायामा । ९ F A दिष्का । १० A दृस्य । ११ A. वि । १२ F. ष्टां । १३ A सां
१४ A ल्पते F ल्पयेत् । १५ A न्या । १६ A त्र्य । १७ D मा । १८ A चक्रा समा । १९ A यांशकेभागा
२० D योः । २१ B. F. हस्वा । २२ B D समध्यानां । २३ F. C. र । २४ A. आयु and आयले ।
२५ D तत् । २६ D. द्भवा । २७ A वल । २८ D. पुंलिखाम । २९ B मध्यसं ।

अङ्गुलत्रितयं[1] सार्धमायामेन[2] कनिष्ठिका ।
अनामा[3] द्विकलायामा यवद्वय[4]समन्विता ॥ ३५८ ॥

पञ्चाङ्गुलायता मध्या तर्जनी चतुरङ्गुला ।
अङ्गुष्ठस्य तथा दैर्घ्यं चतुरङ्गुलसम्मितम् ॥ ३५९ ॥

अङ्गुष्ठस्य परीणाहः कर्तव्यश्चतुरङ्गुलः ॥
तर्जन्यास्तुपरीणाहस्त्र्यङ्गुलः परिकीर्तितः ॥ ३६० ॥

सार्धाध्यर्धकलाप्रोक्ता मध्यमा[6] परिणाहतः ।
अनामा तर्जनीप्रख्या यवयुग्मेन[7] हीयते ॥ ३६१ ॥

अनामिकापरीणाहं त्र्यङ्गुलं परिकीर्तितम् ।
अनामिकापरीणाहाद् द्वियवोना कनिष्ठिका ॥ ३६२ ॥

एवं दैर्घ्यपरीणाहः स्फुटः प्रोक्तः प्रमाणतः ।
अङ्गुष्ठप्रथमं पर्व द्व्यङ्गुलं द्वियवा[9]धिकम् ॥ ३६३ ॥

अग्रपर्व तथा प्रोक्तं द्व्यङ्गुलं द्वियवोनकम् ।
अङ्गुष्ठस्य बहिः पर्व तृतीयं त्र्य(द्व्य)ङ्गुलं भवेत् ॥ ३६४ ॥

पृष्ठेऽग्रे[11]पर्वणश्चोर्ध्वं भवेन्नखसमुद्भवैः[12] ।
तर्जन्याः प्रथमं पर्व यवाः पञ्चदश स्मृतम् ॥ ३६५ ॥

चतुर्दश[13] द्वितीयं स्यादेकादश तृतीय[14]कम् ।
त्रीण्यङ्गुलानि सार्धानि मध्याद्यं पर्व पश्चिमम् ॥ ३६६ ॥

ऊर्ध्व[15]पर्वाग्रपृष्ठे तु नखैः[16] कार्यो[17] विचक्षणैः ।
अनामे (:) प्रथमं पर्व यवा दशमितं[18] तथा ॥ ३६७ ॥

अङ्गुलं मध्यपर्व स्यात्तस्याः पृष्ठे तु पर्वणि ।
प्रथमे द्व्यङ्गुलं सार्धं दैर्घ्यं स्यात्पूर्ववन्नखः ॥ ३६८ ॥

निर्लोम प्रोज्ज्वलं कार्यं पा[19]ण्यङ्गुलितलं[20] बुधैः ।
अङ्गुल्यग्रे यवाग्रं स्या[21]त्स (दर्वाक् स) जीवःक्रियते नखः ॥ ३६९ ॥

---

१ A. या सार्धं F यं समा। A यं सामा २ A सायामेन F यातेमेन A यातमेन। ३ A सिका द्विकलायाता। पद। ५ A. लीयतौ मध्यौ। ६ A. हा। ७ A मिस्त। ८ A ग्मं। ९ A वैं। १० D. यवोनकम्। ११ D. ष्ठाग्र। १२ A वम्। १३ B. D. F. शं। १४ F. न्तृ। १५ A अर्ध। १६ A खे। १७ A र्यें। १८ A तथाम्रिकतं। १९ B. D. त्री। २० B. D. ल। २१ A देया।

ततोऽग्रे जीवहीनं तु नखाग्रं परिकल्पयेत् ।
सजीवो लोहितः किञ्चिन्निर्जीवो मधुरच्छविः ॥ ३७० ॥

यवत्रितयमानेन नखाग्रं परिकल्पयेत् ।
प्रदेशलक्षणं प्रोक्तं स्थानानां लक्ष्यते तथा ॥ ३७१ ॥

पञ्चानाञ्च चतुर्णाञ्च तथाष्टानां यथाक्रमम् ।
ऋजु स्यात्सम्मुखं स्थानमन्यदर्द्धर्जुसंज्ञितम् ॥ ३७२ ॥

तृतीयं स्थानकं साचि तुर्यं द्व्यर्धाक्षिसंज्ञितम् ।
पञ्चमं[1] भित्तिकं[2] प्राहुर्मज्ज्ञा(स्तज्ज्ञाः)पार्श्वगतं च तत्[3] ॥ ३७३ ॥

पञ्चस्थानानि मुख्यानि कथितानीह संज्ञया ।
ऋज्वादिपदपूर्वं स्यात्परावृत्तं चतुर्विधम् ॥ ३७४ ॥

स्थानकानि नवैवं[4] स्युश्चित्रलेखाविधिं प्रति ।
नवस्थानकमध्ये स्युरष्टौ वं[6] ( ष्टाव ) न्तरसंज्ञया ॥ ३७५ ॥

तेषां तु लक्षणं वक्ष्ये ब्रह्मसूत्रविभेदतः ।
पुरतः पूर्वभागः स्यात्परभागस्तु पृष्ठतः ॥ ३७६ ॥

सुप्रमाणो वृद्धिभागो हीनश्चेत् क्षयभागकः ।
चतुष्टयं प्रकाराणां व्यवहाराय दर्शितम् ॥ ३७७ ॥

भूलोकमल्लदेवेन बोधार्थं शिल्पकारिणाम् ।
ब्रह्मसूत्राद्बहिः सूत्रे षड्ङ ( ट्षड ) ङ्गुलमध्यमे ॥ ३७८ ॥

यत्र स्याँमा[7]मृजु(त्तदृजु) स्थानं रूपं स्याँन् मुखयोगितम् (सांमुख्ययोगि तत्)
सम्मुखं स्यादृजुस्थानं परभागोऽत्र नेष्यते ॥ ३७९ ॥

पूर्वभागगतं गात्रं सम्पूर्णं दृश्यते स्फुटम् ।
कर्णौ मात्रामितावत्र शङ्खावङ्गुलसम्मितौ ॥ ३८० ॥

पादौ भागमितौ दृश्यावङ्गुल्यश्च त्रिभागिकाः ।
ऋजुस्थानमिदं प्रोक्तं[10]मवक्राकार[11]धारणात् ॥ ३८१ ॥

१ A प्रथ । २ A भक्ति । ३ D यत् । ४ A नचैव । ५ D व । ६ A य B अ । ७ D स्याम B स्यामा । ८ A सामुख । ९ A द । १० B. D. क्तं मेचका । ११ F का ।

अथार्धर्ज्जु(र्जु)[1]प्रवक्ष्यामि स्थानकञ्च क्रमागतम् ।
अन्तरं ब्रह्मसूत्रस्य पक्षसूत्रस्य चैकतः ॥ ३८२ ॥

अष्टाङ्गुलं ततोऽन्यत्र चतुरङ्गुलमन्तरम् ।
उक्तेऽप्यर्धर्जुके स्थाने लम्बसूत्रक्रियाक्रमः ॥ ३८३ ॥

इदानीं सम्प्रवक्ष्यामि साचि[2]सूत्रस्य लक्षणम् ।
अपाङ्गात्कर्णपाल्याश्च स्तनस्यान्तरपार्श्वतः ॥ ३८४ ॥

जानुत्रिभागतो गर्ह्यं जङ्घाप्रान्ताद्विनिर्गतम् ।
परभागगते पादे कल्पि(ल्प्य)तेऽङ्गुष्ठमूलतः ॥ ३८५ ॥

स्तनबाह्यप्रदेशाच्च कुचचूचुकतो बहिः ।
जानुतः पञ्चमांशेन बहिर्भागे व्यवस्थितम् ॥ ३८६ ॥

सर्वपादेतु मध्याया अनामायाश्च मध्यगम् ।
स्यातामेवं पक्षपौ[3](सू)त्रे ब्रह्मसूत्रं तु कथ्यते ॥ ३८७ ॥

ललाटे च भ्रुवोर्मध्ये नासाग्रे बन्धतो[4] बहिः ।
नाभिरन्ध्रं(न्ध्र)बहिःपार्श्व(र्श्वे)लिङ्गमध्ये समागतम् ॥ ३८८ ॥

परभागगतस्याग्रं मुखं[5](ङ्घ्रिगुल्फ-)स्योपरि सङ्गतम् ।
ब्रह्मसूत्रप्रकारोऽयं भागे[6]नैकेन संयुतः ॥ ३८९ ॥

कथितोऽथ प्रदेशानां सन्निवेशोऽभिधीयते ।
परभागे प्रदृश्येत कर्णावर्त्तो यवद्वयम् ॥ ३९० ॥

इतरल्लुप्यते सर्वं तत्पाली दृश्यते मनाक् ।
शङ्खश्चैवाक्षिकूटश्च कूर्चमूलं तथैव च ॥ ३९१ ॥

लुप्यते परभागे तु स्थानके[7]ऽर्धर्जुसंज्ञिते ।
पञ्चाङ्गुलं बाहुमूलं परभागे प्र[8]शस्यते ॥ ३९२ ॥

परभागमतश्चापि[9] किञ्चित्तिर्यग् बहिर्भवेत् ।
कर्णावर्तस्य यः प्रान्तः पूर्वभागे स लुप्यते ॥ ३९३ ॥

---

१ D अर्द्धार्जुकं । २ D ची । ३ A मा । ४ A. बाधतो । ५ F. सु । ६ A. गो । ७ D. नेऽर्धर्जुक ।
८ D. दृश्य । ९ D. भिः B भि ।

साद्धीङ्गुलं[1] प्रदृश्यं स्याच्छ्रवणे(णं)पूर्वभागतः ।
नासिकाग्रं[2] यवाः पञ्च परभागव्यवस्थितम् ॥ ३९४ ॥

यवत्रयं पुटस्तस्य ब्रह्म[3]सूत्रादिति स्थितिः ।
नासापुटात्कपोलस्य सार्द्धद्व्यङ्गुलमन्तरम् ॥ ३९५ ॥

परभागौष्ठयुग्मस्य मात्रा सा(स)द्वियवा भवेत् ।
हनुश्चैव तथा ग्रीवा परभागे[4]ऽङ्गुलद्वयम् ॥ ३९६ ॥

ब्रह्मसूत्रात्परो(रे)भागे[5] ग्रीवा दृश्या षडङ्गुला ।
ब्रह्मसूत्रात्परे भागे हि[6]क्का मात्रान्तरा भवेत् ॥ ३९७ ॥

हन्वँ[7]ग्रात्परभागेंशमव(समध)स्थादङ्गुले लिखेत् ।
बँ[8]न्धुस्था(स्थं)ब्रह्मसूत्रार्ध (त्रं च) परभाग(गः)स्थितस्ततः ॥ ३९८ ॥

पञ्चाङ्गुले[9] प्रकर्तव्यः पुरःसप्ताङ्गुलान्तरे ।
कक्षामूलाद्बहिर्लेखा बाहुमूलसमाश्रिता ॥ ३९९ ॥

अष्टाङ्गुलान्तरा लेख्या चित्रकर्मविशारदैः ।
कक्षाद्वितयमध्ये स्यादङ्गुलानां च[10] विंशतिः ॥ ४०० ॥

पञ्चाङ्गुलैं[11](लं)परा(रे)भागे बाहुमूलं प्रकल्पयेत् ।
[12]चूँचुकात्परभा[13]गस्था बृहती द्व्यङ्गुले[14] लिखेत् ॥ ४०१ ॥

पूर्वभागं (गे) कलाद्वन्द्वे[15] बहिर्लेखां[16] शरीरगाम् ।
विस्तारे परभागस्थश्च( च )तुर्दशयवस्ततः ॥ ४०२ ॥

आयतोऽयं बुधैः कार्यो वृत्त(त्तः)पूर्वकलामितः ।
पार्श्वसूत्रे तु संलग्ना मध्यभागगता बुधैः ॥ ४०३ ॥

लेखनीया बहिर्लेखा पूर्वभागसमाश्रिता[17] ।
ता(सा)निर्गता तथा श्रोणी सार्धपञ्चाङ्गुला परा[18] ॥ ४०४ ॥

पूर्वभागे तथा श्रोणी भवेद्दशभिरङ्गुलैः ।
ब्रह्मसूत्रात्तथा काञ्ची परभागे षडङ्गुला ॥ ४०५ ॥

---

१ A. ल। २ A. यां। ३ A. यव। ४ D. मे. A. गो। ५ A. गो। ६ D. F. द्वि B. द्धि। ७ F. F. हिका। ८ F. बा D. वन्ध। ९ A. न कर्तव्ये B न कर्तव्यं। १० D. F. तु। ११ A. ले। १२ A चिबु। १३ A गस्यादृबृ। १४ A लं। १५ F न्द्वं। १६ F ख्यं। १७ A. ताः। १८ B रे।

एकादशाङ्गुला पूर्वे[1] भागे लेख्या विचक्षणैः ।
मेढ्रमूलं परे भागे मात्रार्धं भागयुग्मकम् ॥ ४०६ ॥

दशाङ्गुलं पूर्वभागे लेखनीयं विशारदैः ।
लिङ्गमूलात्परे भागे वङ्क्षणं[2] सार्धमङ्गुलम् ॥ ४०७ ॥

अङ्गुलद्वितयं सार्द्धं पूर्वभागे तु[3] वङ्क्षणः ।
वङ्क्षणात्[4]परभागस्थमूरुशीर्षं बहिःस्थितम् ॥ ४०८ ॥

अष्टाङ्गुलं परे भागे पूर्वतन्तु ( स्तु ) दशाङ्गुलम् ।
परस्थमूरुमूलं तु कुर्यादङ्गुलगूहितम् ॥ ४०९ ॥

पूर्वस्थितोरुमूलेन चित्रलेखनकोविदैः ।
जानुमण्डलतो बाह्यं कलामात्रं प्रदृश्यते ॥ ४१० ॥

परभागे परे पादे पूर्वभागे कलाद्वयम् ।
पूर्वस्याङ्घ्रेरिदं मानं विपरीतं प्रदृश्यते ॥ ४११ ॥

इतरत्सर्वमृजुवत्परं[7]जङ्घागतं भवेत् ।
पूर्वभागेऽङ्गुष्ठमूलं परपार्ष्णि[8][9]समं लिखेत् ॥ ४१२ ॥

नखाग्रे[10] परपादस्य भूमिसूत्रं विधीयते ।
पार्ष्णेः प्रदेशिनी(नीं)यावत्पाददैर्घ्यं य(न)वाङ्गुलम्[11] ॥ ४१३ ॥

पराधाङ्गुष्ठतश्चोर्ध्वमङ्गुलं[12] परिकल्पयेत् ।
प्रदेशिन्या समारभ्य कनिष्ठां यावदङ्गुलिः ॥ ४१४ ॥

यवद्वयं[13] विनाग्राः स्युरङ्गुल्यः क्रमविस्तृताः ।
भूमिसूत्रादधोऽङ्गुल्योऽ[14]ङ्गुष्ठं(च)परिकल्पयेत् ॥ ४१५ ॥

कनिष्ठाग्रं तथा कार्यं भूमिसूत्रं[15]समं यथा[16] ।
अर्धर्जुकमितिस्थानं क्रमशो लक्षणान्वितम् ॥ ४१६ ॥

साम्प्रतं क्रमशः प्राप्तं साचिस्थानं निगद्यते ।
अङ्गुलानि दशैकत्र कलामात्रं[17] ततोऽन्यतः ॥ ४१७ ॥

---

१ A र्वं । २ A वृषणं । ३ A तु वृषणम । ४ A वृषणात् । ५ A स्तु । ६ F. खे । ७ A. रा । ८ A गा । ९ A र्ष्णि । १० B. D. नेत्राग्रे परि । ११ A लः । १२ A लतश्चार्धे अ । १३ A य । १४ A गुल्फम । १५ A त्रं । १६ A. तथा । १७ D. त्रां ।

अन्तरं ब्रह्मसूत्रस्य पक्षसूत्रद्वयस्य च ।
साचिस्थाने[१] समाख्यातं[२] ऊर्ध्वसूत्रास्थितिक्रमः ॥ ४१८ ॥

इदानीं लक्ष्यतेऽस्माभिः साचिरूपविनिर्णयः ।
ललाटाल्लोचनप्रान्तात्कपोलस्कन्धदेशतः ॥ ४१९ ॥

एकाङ्गुलात्स्तनस्यान्तर्नाभेः[३]सार्धाङ्गुलाद्बहिः ।
वङ्क्षणान्[४]मणिदेशाच्च बहिर्व्यक्तं विनिर्गतम् ॥ ४२० ॥

परपादाङ्गुष्ठमूले पार्श्वसूत्रं विधीयते ।
सीमन्ताच्च भ्रुवोर्मध्यान्नासारन्ध्रस्य मध्यतः ॥ ४२१ ॥

अङ्गुलार्द्धाग्रतः पश्चान्नाभिरन्ध्रस्य मध्यतः ।
मेहनस्य बहिर्भागाज्जानुमण्डलपूर्ववर्त[६]ः ॥ ४२२ ॥

नलकस्य तथा प्रान्ताद् ब्रह्मसूत्रं न्यसेत् क्रमात् ।
मस्तकस्य तथा पृष्ठात्कर्णोपान्तात्तथैव च ॥ ४२३ ॥

कन्धरास्कन्धसन्धेश्च स्तनचूचुकमण्डलात् ।
अङ्गुलात्पूर्वतश्चैव मध्यभागेन सङ्गतम् ॥ ४२४ ॥

कलामात्रं परित्यज्य काञ्चीदेशस्य मध्यतः ।
मणिवन्धगतं[७] तद्वत्पूर्वपादस्य पार्ष्णितः ॥ ४२५ ॥

अन्यपार्श्वगतं सूत्रं क्रमेणैव निरूपितम् ।
ब्रह्मसूत्राद्बहिर्लेखा केशान्ते परभागिका ॥ ४२६ ॥

लिख्यते तु कलामात्रां मस्तकं[११] सार्धमङ्गुलम् ।
भाग एकः प्रदृश्यः स्यादुत्सेधः पूर्वभागिकः ॥ ४२७ ॥

उत्सेधाच्च कलामानाद्बहिर्लेखा शिरःस्थिता[१२] ।
उत्से[१३]धप्रान्ततो रेखा भागद्वयकृतान्तरा[१४] ॥ ४२८ ॥

ततः शरासनाकाराः(रा) कर्णावर्ताग्रगामिनी ।
लिख्यते शिरसो लेखा भागद्वयकृतान्तरा ॥ ४२९ ॥

---

१ A. न । २ D. नं मू। ३ A भि । ४ A. वृषणादा F. वंक्षणादा । ५ A. र्धार्धे । ६ D. वत । ७ A छि । ८ A ते । ९ D र्ष्णि । १० D नान् । ११ A कः । १२ D ताः । १३ A धः प्रा । १४ A गाः ।

शङ्खप्रदेशे के[1]शान्ता लिख्यते सा विचक्षणैः ।
केशान्ते परभागस्य ब्रह्मसूत्रस्य चान्तरम् ॥ ४३० ॥
कलामात्रं विनिर्दिष्टं भ्रूलेखाऽर्धयवाधिका ।
भ्रूलेखा द्यङ्गुला दृश्या नासामूलं चतुर्यवम् ॥ ४३१ ॥
कनि[2]नी लुप्यते तत्र श्वेतभागश्च दृश्यते ।
दृश्यते त्रियवं ज्योतिरवशिष्टं विलुप्यते ॥ ४३२ ॥
ब्रह्मसूत्राच्च नेत्री[3]यमेवं सार्धाङ्गुलान्तरम् ।
नासामूलाद्वर्त्मरेखा व[4]क्रा कार्या विचक्षणैः ॥ ४३३ ॥
ब्रह्मसूत्राद्वर्त्मरेखाप्रान्तो रुद्र[5]यवैर्मितः ।
यवद्वयं प्रलुप्येत पूर्वभागस्य चक्षुषः ॥ ४३४ ॥
करवीर(ः)शि(सि)तो भाग[6] इतर[7]त् दृश्यते स्फुटम् ।
ब्रह्मसूत्रस्य नेत्रस्य सार्धमङ्गुलमन्तरम् ॥ ४३५ ॥

अक्षि[8]कूटश्च शङ्खश्च कपोलो गण्डमण्डलम् ।
पिप्पली कर्णपाली च कर्णमूली प्रदृश्यते ॥ ४३६ ॥
कर्णगर्ते त्रि[9]भागान्ते दृश्यते पूर्वभागतः ।
नासामध्यं ब्रह्मसूत्रा[10]च्चतुर्यवमुदीरितम् ॥ ४३७ ॥
परभागे कपोलस्था बहिर्लेखा चतुर्यवा[11] ।
परभागस्थनेत्रस्य बुधै[12]र्ब्रह्मकपोलतः ॥ ४३८ ॥
ऊर्ध्वं विनिर्गतं कार्यं परिमाणाद्यवद्वयम् ।
नासाग्रं परभागस्थं ब्रह्मसूत्रेऽङ्गुलं भवेत् ॥ ४३९ ॥
ब्रह्मसूत्रात्परे[13] भागे[14] घोणा[15]पुटोऽङ्गुलं भवेत् ।
दृश्यतेऽथ यवो गोजी तदग्रेऽ[16]र्धाधिको यवः ॥ ४४० ॥
उत्तरोष्ठः प्रकर्तव्यस्तत्समोऽप्यधरो भवेत् ।
हनुचक्रबहिर्लेखा तत्समा परिकल्पयेत् ॥ ४४१ ॥

ब्रह्मसूत्रात्परे भागे स्याता[17]मोष्ठौ तथा हनुः ।
चतुर्यवमितादृश्याः पूर्वभागे यव(था)र्जुके ॥ ४४२ ॥

---

१ A. शदे । २ D. नी । ३ D त्रार्ध । ४ A. च । ५ A. द्व । ६ D. ति । ७ A. रं । ८ B. D. शङ्खश्च कूटश्च । ९ A त्रिभागोन F कर्णगर्तेत्रिभोगोने B D कर्णगर्तत्रिभिर्भागो । १० A त्रं च । ११ D. विंधा । १२ A. धव्र । १३ A. रो । १४ A गो । १५ B. D. F. घुं । १६ A. ध्व । १७ D. म ।

हनुमण्डलतश्चाधो गलवृद्धिश्चतुर्यवा ।
ब्रह्मसूत्रात्परे भागे ग्रीवा लेख्या कलान्तरा ॥ ४४३ ॥

कन्धरास्कन्धसन्धेश्चे[1] गलवृद्धेस्[2]तथान्तरम्[3] ।
मात्रामात्रं प्रकुर्वीत हिक्का भागेन कल्प(ल्प्य)ते[4] ॥ ४४४ ॥

ब्रह्मसूत्रात्परे भागे कक्षामूलं तु भागतः ।
कक्षामूलाद्बहिः कार्यं[5] बाहुरेखाऽङ्गुलत्रयम् ॥ ४४५ ॥

ब्रह्मसूत्रात्परे भागे कर्ला[6] स्यात्कुचचूचुकम् ।
ऊर्ध्वभार्गः[7] प्रदृश्येत बाहुरेखा ततो बहिः ॥ ४४६ ॥

अङ्गुलत्रितयोद्देशे करणीया विचक्षणैः ।
ब्रह्मसूत्रात्परे भागे मध्यदेश(ः)कलामितः ॥ ४४७ ॥

ततो बहिर्बाहुरेखा व्यङ्गुला लिख्यते बुधैः ।
ब्रह्मसूत्रात्परे भागे[8] भागः स्याद्द्वियवाधिकः ॥ ४४८ ॥

ततो भवेद्बाहुरेखा व्यङ्गुला कथिता शुभा ।
ब्रह्मसूत्रात्परे काञ्चीस्थानं पञ्चाङ्गुलायुतम् ॥ ४४९ ॥

ततो भवेद्बाहुरेखा व्यङ्गुला द्वियवाधिका ।
ब्रह्मसूत्रात्परे भागे बस्तिमस्तकपार्श्वगम् ॥ ४५० ॥

पञ्चाङ्गुलं प्रकर्तव्यं यवार्धाधिकतो बुधैः[10] ।
सार्धद्व्यङ्गुलतः कार्या बाहुरेखा ततो बहिः ॥ ४५१ ॥

[11]ब्रह्मसूत्रात्परे भागे बस्तिमस्तकपार्श्वगम् ।
पञ्चाङ्गुलं मेढ्रमूलं चतुर्यवसमन्वितम् ॥ ४५२ ॥

पञ्चाङ्गुले ब्रह्मसूत्राद् बस्तिपार्श्वे परं भवेत् ।
ब्रह्मसूत्रात्परे भागे मेढ्रमूलं चतुर्यवम् ॥ ४५३ ॥

तस्मादूरु[12]शिरःसन्धिर्भवेत्पञ्चाङ्गुलै[13]र्न्वितः ।
ऊरू परे ब्रह्मसूत्रात्करणीयः(यौ) षडङ्गुले ॥ ४५४ ॥

---

१ D. न्धेः च A न्धिश्च । २ A. द्धि । ३ F. चतुर्यवा । ४ D. येत् । ५ F र्यें A. र्या । ६ B D. तत्र । ७ A. अर्धं । ८ B. F. गे । ९ B D कुक्षौ । १० F धः । ११ This stanza is found only in B and D । १२ D रू । १३ D लं त ।

मणिबन्धगता रेखा द्व्यङ्गुले द्वियवाधिके ।
अङ्गुष्ठपार्श्वगा रेखा ब्रह्मसूत्राद्दशाङ्गुले ॥ ४५४ ॥

ततोऽधस्तात्प्रदृश्येत पताकाकारकं तलम् ।
कनिष्ठा गुं[1]प्यते तत्र रेखया सक्थिमध्यया ॥ ४५५ ॥

पञ्चाङ्गुलं ब्रह्मसूत्रात्सक्थिमध्यं प्रकीर्तितम् ।
विप्रसूत्रात्परे भागे सक्थिमध्यं षडङ्गुलम् ॥ ४५६ ॥

ब्रह्मसूत्राद्ध्वेदों[2]णिर्भागेनैकेन कल्पिता ।
जानुशीर्षकलामानं जानु[3]नोऽधस्ततोऽङ्गुले ॥ ४५७ ॥

शर्[4]कबस्तौ ब्रह्मसूत्रं तलं त्यक्त्वा प्रगँच्छति ।
[6]यँवत्रँयादङ्गुलान्तं पादपृष्ठे च तिष्ठते ॥ ४५८ ॥

परभागे गते पादे मध्यमर्माक्रम्य गच्छति ।
पूर्वपादस्य पृष्ठे तु परपादस्य कोविदैः ॥ ४५९ ॥

भूमिरेखा प्रकर्तव्या पार्ष्णिस्तस्य विलुप्यते ।
नेत्रमात्रामितं दैर्घ्यं परपादे प्रकल्प(ल्प्य)ते ॥ ४६० ॥

अर्धर्जुकाकृतिः कार्यः पादश्चित्रविशारदैः ।
परपादस्य कूर्चायाः पूर्वपादतलस्य च ॥ ४६१ ॥

मध्ये व्योम प्रदृश्येत मात्रया मात्रितं स्फुटम् ।
एकमङ्गुलमुत्सृज्य ब्रह्मसूत्रस्य प(पू)र्वतः ॥ ४६२ ॥

ग्रीवा द्विभागिका लेख्या चित्रकर्मविशारदैः ।
पूर्वभागे प्रकुर्वीत कक्षामूलं च तालतः ॥ ४६३ ॥

कक्षामूलात्ततो बाहुर्भवेत्तिर्यग् विभागिकैः[11] ।
ब्रह्मसूत्रात्कलामात्रे हृदयं पुरतः स्थितम्[12] ॥ ४६४ ॥

हृदयाच्चूचुकं कार्यं गोलकत्रै[13]यदूरगम् ।
स्तनमेचकचक्रं तु लिख्यते वृत्तमायतम् ॥ ४६५ ॥

---

१ A लुप्य । २ B. D. त्वा । ३ B D. धातु । ४ B D. कं । ५ D. य । ६ F. या । ७ A क्रमा । ८ B F मक्रम । ९ F तत्र । १० D. क्रमायि । ११ A काः । १२ A तः । १३ D द्व ।
६

मात्रामितं तु विस्तारे[1] दैर्घ्यं[2] गोलकमादिशेत् ।
स्तनमण्डलतः कार्या बृहती चतुरङ्गुला ॥ ४६६ ॥

ततः सप्ताङ्गुला लेख्या बाहुलेखा विचक्षणैः ।
बाहोरभ्यन्तरे रेखा निर्गत्य परिगच्छति ॥ ४६७ ॥

मध्यभागं परित्यज्य जघने[3] सङ्गता भवेत् ।
मध्यस्य चाङ्गरेखाया भवेत्त्र्यङ्गुलमन्तरम् ॥ ४६८ ॥

श्रोणेश्च[4] भुजरेखाया अन्तरं भाग इष्यते ।
ब्रह्मसूत्राद्भवेच्छ्रोणी पूर्वभागे दशाङ्गुलम् ॥ ४६९ ॥

एकादशाङ्गुलैः[6] काञ्चीगुणदेशः प्रकल्प (ल्प्य) ते ।
पूर्वभागे प्रकोष्ठः स्यात् सूत्रादेकादशाङ्गुलं ॥ ४७० ॥

नितम्बो गुप्यते तत्र प्रकोष्ठेन निगूहितः ।
बहिर्भागे प्रदृश्यं स्यात्स्फिक्कुटं मणिबन्धतः ॥ ४७१ ॥

अर्धाङ्गुलप्रमाणेन पञ्चमीचन्द्रसन्निभम् ।
सूत्रात्तु मेहनं कुर्यात्कलामात्रेण कोविदः ॥ ४७२ ॥

मेहनाद् द्व्यङ्गुले श्रोणिः श्रोणेरष्टाङ्गुले भुजः ।
पताकासन्निभः कार्यो दृश्यः पृष्टकरो बुधैः ॥ ४७३ ॥

कनिष्ठानखतो लेख्या सक्थि[11]रेखा बहिर्गता ।
सूत्रतो द्व्यङ्गुलं कार्यमूरुमूलं विचक्षणैः ॥ ४७४ ॥

पुरोदेशस्थितः सूत्रा[12]च्छ्रोणिदेशस्तु भागतः ।
[13]श्रोणिदेशाद्बहिर्लेखा भवेदष्टाङ्गुलैर्मिता ॥ ४७५ ॥

जानु[14]कृकाटिका लेख्या ब्रह्मसूत्रात्षडङ्गुला ।
पराङ्गिजानुसन्धौ तु पूर्व[15]जानु व्यवस्थितम् ॥ ४७६ ॥

द्व्यङ्गुलं तत्प्रमाणेन लेखनीयं समासतः ।
जानुचक्राद्बहिर्लेखा लेखनीया षडङ्गुले[1] ॥ ४७७ ॥

१ D रो। २ D कर्णं। ३ A ना। ४ B द्वय D द। ५ B. F. जांनुज। ६ A लं। ७ B. लु। ८ A. D. कू। ९ A. भः। १० A. महता। ११ D. शक्ति। १२ D. स्पा। १३ D. णी। १४ A. तंश्च क्रिया, श्वकुंतका D तः कृकाटिकां। १५ D वां। १६ A लं।

सार्धपञ्चाङ्गुलं[1] तत्र जङ्घामध्यं प्रकीर्तितम् ।
द्व्यर्धाक्षि[2] वक्ष्यते स्थानं लक्ष्यलक्षणसंयुतम् ॥ ४७८ ॥

एकत्रैकाङ्गुलं यस्मिन्नन्यत्रैकादशाङ्गुलम् ।
मध्ये[3] द्व्यर्धाक्षिकं स्थानं लम्बसूत्रक्रमो भवेत् ॥ ४७९ ॥

केशान्तान्नासिकाग्राच्च कक्षामूलाच्च नाभितः ।
ऊरुमध्यात्पार्श्वसूत्रं[4] मूलेऽङ्गुष्ठस्य संस्मृतम्[5] ॥ ४८० ॥

सीमन्ततो भ्रुवोर्मध्याद्ब्रह्मसूत्रं विनिर्गतम्[7] ।
गोपयेदग्रतः कक्षामूले[8] देशा(शोऽ)थ मात्रया ॥ ४८१ ॥

अङ्गुलं[9] नाभितस्त्यक्त्वा लिङ्गपार्श्वाविषाणि(णिदेश)तः[10][11] ।
अङ्गुष्ठोपान्तदेशाच्च पूर्वमध्याङ्गुलीं[12] व्रजेत् ॥ ४८२ ॥

अन्यपार्श्वगतं सूत्रं मूर्धपृष्ठाद्विनिर्गतम्[13] ।
कन्धरास्कन्धसन्धेश्च[14] मध्यदेशेन सङ्गतम् ॥ ४८३ ॥

मणिबन्धात्तर्जनीतः पूर्वपादस्य पार्ष्णितः ।
क्रमेणैवं प्रकुर्वीत सूत्रत्रयमितीरितम् ॥ ४८४ ॥

ब्रह्मसूत्रात्परे भागे केशान्तश्चार्धगोलकः[15] ।
अङ्गुलं च तथा दृश्या भ्रूलेखा[16] यवतोधिका ॥ ४८५ ॥

ततः सूत्रात्परे भागे ब्रह्मसूत्रश्च ( नेत्रदेशश्च ? ) षड्यवैः[17] ।
ततश्च निर्गतं वर्त्म प्रध्व[18](उर्ध्व)भागे यवद्वयम् ॥ ४८६ ॥

नासामूलस्थितात्सूत्रान्नेत्राग्रं[19] परभागिकम्[20] ।
दृश्यते षड्यवं तत्र त्रियवं कृष्णमण्डलम् ॥ ४८७ ॥

त्रियकः[21] ( वः ) श्वेतभागः स्याल्लुप्यते करकस्तथा[22] ।
नासामध्यात्तथा दृश्यं कपोलं त्रियवं[23] स्फुटम् ॥ ४८८ ॥

---

१ F D र्द्धं । २ A भि । ३ A ध्यं, र्द्धर्द्धाक्षियव । ४ A कस्थाने । ५ A B त्र । ६ A स्मृता B स्रतः । ७ B D F र्मि । ८ A B F गोहेपीहंत्वतःकश्या A गोपयेत्त्वग्रतः, मोहेर्हन्वग्रतः । ९ A लं । १० A ले, नं । ११ D श्वाद् A श्वं । १२ A ली । १३ ऊर्ध्वं । १४ A न्धि । १५ A र्द्धमालकाः । १६ F भू । १७ F वा । १८ A. B. D. तत्र । १९ A न्तेवाग्रं B प्रागग्र । २० A का । २१ D यः । २२ A यत्र करकः । २३ D. F. वः ।

नासामध्यं ब्रह्मसूत्राच्चतुर्यवमुदाहृतम् ।
नासाग्रं ब्रह्मसूत्राच्च[1] दृश्यं स्यादङ्गुलं परे ॥ ४८९ ॥

तस्मात्सूत्रात्परे भागे दृश्य ( श्यः ) कक्षधरोऽङ्गुलम् ।
ब्रह्मसूत्रात्परे भागे कक्षामूलं तु मात्रया ॥ ४९० ॥

कक्षामूलाद्बाहुमूलं मात्रामात्रं प्रदृश्यते ।
अन्यः प्रलुप्यते बाहु[2]र्जठरेण तलावधिः[3] ॥ ४९१ ॥

ब्रह्मसूत्रात्कुचावर्तो भवेदङ्गुलतो बहिः ।
अर्धचन्द्राकृतिर्दृश्यः स एवाङ्गुलसम्मितः ॥ ४९२ ॥

ब्रह्मसूत्रात्परे भागे नाभिरङ्गुलमात्रिका ।
ततो बहिः प्रदृश्येत जठरं चैकमङ्गुलम् ॥ ४९३ ॥

ब्रह्मसूत्रात्परः काञ्चीगुणदेशोऽङ्गुलत्रयम् ।
ब्रह्मसूत्राद् बस्तिशिरः पार्श्वे[5] स्याच्चतुरङ्गुलम् ॥ ४९४ ॥

ब्रह्मसूत्रान्मुष्कमूलं दृश्यते तच्चतुर्यवम् ।
मुष्को न दृश्यते तत्र लिङ्गेन परिगूहितः ॥ ४९५ ॥

ब्रह्मसूत्रादूरुमूलं भवे[6]द्भागेन सङ्गतम् ।
लिङ्गस्याग्रे[7] भवेदूरुभागः स्यात्त्रियवाधिकः ॥ ४९६ ॥

ब्रह्मसूत्रादूरुमध्यं भवेदध्यर्धगोलकम् ।
सक्थि[8]देशाद्बहिर्दृश्य(श्यो)ह्यङ्गुष्ठश्चापि तर्जनी ॥ ४९७ ॥

ब्रह्मसूत्रात्परे देशे परपादस्त्रिभागतः ।
दृश्यते साचिंतं(वत्)तद्वदङ्गुल्यो[10]ऽपि तदर्धिकः(काः) ॥ ४९८ ॥

पूर्वार्द्धे[11] गुल्फशीर्षाच्च पराह्ले (र्द्धे) नखमध्यतः ।
भवेद्भूमिगतं सूत्रं परपादस्य लेखने ॥ ४९९ ॥

पराङ्घ्रिब्रह्मसूत्राच्च पूर्वभागे प्रदृश्यते ।
सप्ताङ्गुलकृतायामः शेषं पूर्वेण लिप्यते[12] ॥ ५०० ॥

---

१ D त्तु । २ A ज । ३ A धि । ४ A द्व । ५ D र्श्वे A B र्श्वः । ६ A F दध्यर्धगोलकम्
७ D ग्रं । ८ A शक्ति । ९ A F वि । १० D ल्या । ११ A ह्ले । १२ F ख्य ।

ऊरुश्च परपादस्य जंङ्घावर्धे(र्ते) न लुप्यते[२] ।
अक्षि(भि)पार्ष्णिश्च निखिलौ पूर्वपादेन दर्शितौ ॥ ५०१ ॥

वितस्तिः पूर्वपादस्य दैर्घ्यमत्रं[३] निरूप्यते ।
साचिवल्लिरुयते तज्ज्ञैरङ्गुष्ठो[४] लुप्यते मनाक् ॥ ५०२ ॥

ब्रह्मसूत्रात्परे भागे शीर्षमेकादशाङ्गुलम् ।
उत्सेधस्य तथाचोर्ध्वं शीर्षं स्यात्सार्धमङ्गुलम् ॥ ५०३ ॥

उत्सेधस्य तथापाङ्गे मस्तकं त्र्यङ्गुलं भवेत् ।
तत्प्रदेशाच्छिरःपृष्ठं लेख्यं सप्तभिरङ्गुलैः ॥ ५०४ ॥

शङ्खस्थाने समे चोर्ध्वं निम्नं किञ्चिच्छिरो भवेत् ।
ततः शिरोगता लेखा धन्वाकारा प्रलिख्यते ॥ ५०५ ॥

ब्रह्मसूत्रात्परे भागे तालं(लु)स्यादङ्गुलत्रयम् ।
भ्रूलेखा यवमाना तु तत्प्रमाणा विलिख्यते ॥ ५०६ ॥

नासामूलं ब्रह्मसूत्रादर्धमात्रं पुरःस्थितम् ।
कनिनी द्वियवा दृश्या करवीरो न दृश्यते ॥ ५०७ ॥

द्वियवः श्वेतभागश्च दृश्यते तदनन्तरम् ।
दृश्यते त्रियवं तत्र लोचनं[९] कृत(कृष्ण)मण्डलम् ॥ ५०८ ॥

श्वेतापाङ्गो(तभागो)प्यपाङ्गस्थः समग्रं परिदृश्यते ।
समग्रो दृश्यते कर्णो यवद्वितयवर्जितः ॥ ५०९ ॥

कर्णावर्ताद्बहिः शीर्षपृष्ठं दृश्यं ततोऽङ्गुलम् ।
कर्णपालीबहिर्देशे पृष्ठकेशान्तको मनाक् ॥ ५१० ॥

अर्धाङ्गुलप्रमाणेन दृश्यते चित्रलेखने[११] ।
शङ्खकांगल(ङ्कः कपोलो )गण्डश्च दृश्यते पूर्णमण्डलैः[१३,१४] ॥ ५११ ॥

ब्रह्मसूत्रात्परेभागे भवेन्नासापुटोङ्गुलम् ।
अर्धं प्रदृश्यते गोजेरोष्ठाध तु यवाधिकम् ॥ ५१२ ॥

---

१. A दैर्घ्यमत्रनिरूप्यते । २ B D F ति । ३ D मङ्ग्रें । ४ D ष्ठौ । ५ D शीर्षमेकादशाङ्गुलम् । ६ A ले । ७ A ना । ८. A णं । ९ A. ने कुच । १० F. क्रा । ११ A नैः । १२. A कापोलगण्डस्य D काङ्गोलगण्डश्च । १३ D वें । १४ A लात् । १५ D. शेषा ।

ब्रह्मसूत्रात्पुरो[1]भागे हनुग्रीवस्य सङ्गमः ।
लिख्यते[2] त्र्यङ्गु(लै[3]स्त) ज्ज्ञैर्ग्रीवा तत्र द्वि[4]भागिका ॥ ५१३ ॥

ब्रह्मसूत्रात्परे भागे हिक्का सार्धत्रि[5]भागिका ।
ब्रह्मसूत्रात्परे भागे सा[6]र्धसप्तदशाङ्गुलम् ॥ ५१४ ॥

तिर्यङ्मानेन बोद्धव्यं बाहुमूलं विचक्षणैः ।
ततो विनिर्गतं कार्यं बाहुशीर्षं द्विमात्रिकम् ॥ ५१५ ॥

ब्रह्मसूत्रात्परे भागे कुक्षिमूलं च सङ्गतम् ।
कक्षामूलाद्बाहुरेखा बाह्यां भागद्वयं भवेत् ॥ ५१६ ॥

ब्रह्मसूत्रात्परे भागे त्र्यङ्गुलं समुदाहृतम् ।
बाहोराभ्यन्तरा ( री ) रेखा विधृतां स्याद्दशाङ्गुलां ॥ ५१७ ॥

सप्ताङ्गुलं बाहुमध्यं तिर्यक्सूत्रेण क[11]ल्पयेत् ।
बृहतीदेशमुत्सृज्य बाहोराभ्यन्तरी[12] शुभा ॥ ५१८ ॥

रेखा लेख्या तथा तज्ज्ञैर्जघने सङ्गता यथा ।
कुक्षेश्च बाहुरेखाया अन्तरं त्र्यङ्गुलं भवेत् ॥ ५१९ ॥

कूर्परस्य तथा श्रोणेर्व्योम चाङ्गुलमिष्यते ।
कूर्परस्थानविस्तारः पञ्चाङ्गुलमुदीरितः ॥ ५२० ॥

नाभिस्थब्रह्मसूत्रस्य श्रोणेर्मध्यं निगद्यते ।
अङ्गुलैर्मनुसङ्ख्याकैस्तिर्यग्विस्तारकल्प[13]नम् ॥ ५२१ ॥

पक्षाश्रयब्रह्मसूत्र[14]भुजयोः कल्प ( ल्प्य ) म[15]न्तरम् ।
चतुर्दशाङ्गुलं[16] प्राज्ञैः प्रबाहुः पञ्चमात्रिकः ॥ ५२२ ॥

वस्तिशीर्षगति (त) ब्रह्मसूत्रस्य च भुजस्य च ।
अन्तरं तालमात्रं स्यात्प्रकोष्ठात्पञ्चमात्रिकम् ॥ ५२३ ॥

वस्तिस्थ[17]ब्रह्मसूत्रस्य प्र[18]र्त ( प्र ) कोष्ठस्य चान्त[19]रम् ।
दशाङ्गुलं सार्धमात्रं[20] भागः स्यात्प्र[21]प्रकोष्ठकः ॥ ५२४ ॥

---

१ A परे। २ A. न्ते। ३ A लः। ४ A त्रि। ५ A भागि। ६ A भागत्रयभवेन्मुखम्
७ A ह्य। ८ D ज्ञवेदङ्गि। ९ A तः। १० A लम्। ११ A D कल्पितम्। १२ F
१३ D कल्पितम्। १४ A त्रमु। १५ A नान्तरम्। १६ A लैः। १७ A स्थंब्र। १८ A
१९ F रे। २० D त्र। २१ D त्य।

ब्रह्मसूत्रपुरोभागे लिङ्गं द्व्यङ्गुलसम्मितम् ।
मुष्कमूलं भवेन्मात्रा बाहुरष्टाङ्गुलं[१] ततः ॥ ५२५ ॥

चतुरङ्गुलमुद्दिष्टो मणिबन्धो विचक्षणैः ।
पताकेव करः कार्यः ऊरुलग्नतलो बुधैः ॥ ५२६ ॥

मणिबन्धाद्बहिर्देशे स्फिक्कूटं[२] द्व्यङ्गुलं भवेत् ।
ऊरुस्तस्मादधस्तालो रेखया करबाह्यया ॥ ५२७ ॥

करबाह्यगता रेखा सङ्गता सँस्थिरेखया ।
अँ (आ) णिदेशस्य विस्तारो भागद्वयमुदाहृतः ॥ ५२८ ॥

जानुसन्धिप्रमाणं तु सप्ताङ्गुलमुदाहृतम् ।
जानुचक्रस्य विस्तारः सार्धमङ्गुलमिष्यते ॥ ५२९ ॥

इन्द्रबँस्तेस्तु[६] विस्तारो वितस्तेरर्धमिष्यते ।
नँलसन्धेश्च विस्तारः कथितश्चतुरङ्गुलः ॥ ५३० ॥

ततो विनिर्गता कार्या वृत्ता पार्ष्णि द्वि(द्विं)मात्रिका ।
यवद्वितयहीना सा कर्तव्या सुविचक्षणैः ॥ ५३१ ॥

कनिष्ठानामिकामध्यात्ता(स्ता)सामूर्ध्वं प्रदेशिनी ।
अङ्गुष्ठ ऊर्ध्वतस्तासां कर्तव्योऽसौ क्रमेण तु ॥ ५३२ ॥

एवं द्व्यर्धाक्षिकं स्थानं विस्तरेण निरूपितम् ।
ऊर्ध्वरूपं प्रवक्ष्यामि भित्तिकं स्थानक(कं) स्फुटम् ॥ ५३३ ॥

पक्षसूत्रद्वयं तिष्ठेद्ब्रह्मसूत्रं न दृश्यते ।
लम्बसूत्रक्रमो ह्येष भित्तिके समुदाहृतः ॥ ५३४ ॥

अलीके नासिकामध्ये चूचुके सेन्द्रमूर्धनि ।
अङ्गुष्ठगुल्फमूले च पक्षसूत्रं निवेश्यते ॥ ५३५ ॥

तेनैव मिलितं कार्यँ मध्यसूत्रं विचक्षणैः ।
नान्यत्रं दृश्यते क्वापि ब्रह्मसूत्रं ततः स्मृतम् ॥ ५३६ ॥

---

१ A ला । २ A B च । ३ A कू । ४ A शशि । ५ B D पा A F म, श्रो । ६ A व ।
७ A त । ८ D. B. त्वा । ९ F. स्तं ।

ऊर्ध्व[1]पृष्ठे तथा स्कन्धे कूर्परे पार्ष्ण्युपान्ततः ।
इतरत्पक्ष[2]सूत्रं तु[3] क्रमेणैवं विधीयते ॥ ५३७ ॥

ब्रह्मसूत्रात्परे(पुरो)भागे केशान्तस्त्रियवान्तरः ।
नासामूलस्य सूत्रस्य(त्तु) यवाद्वितयमन्तरम् ॥ ५३८ ॥

यवमानान्तरा गोजी निम्ना सा परिकल्प (ल्प्य) ते ।
[4]आस्यमध्यगता रेखा सूत्रान्तं (त्तु) द्वियवान्तरम् ॥ ५३९ ॥

अन्तरं ब्रह्मसूत्रस्य चिबुकस्यैकमङ्गुलम् ।
हनुचक्रं ततो लेख्यं सूत्रात्पश्चयवान्तरम् ॥ ५४० ॥

द्व्यङ्गुलं हनुचक्रं स्याद्ग्रीवासन्धिस्तु मात्रया ।
हि[5]क्का भागान्तरा कार्या ब्रह्मसूत्रानुसारतः ॥ ५४१ ॥

घटिते ब्रह्मसूत्रेण स्तना ( न ) रोहितचूचुके ।
मूलमग्रं च लिङ्गस्य भवेत्सूत्रेण घट्टितम् ॥ ५४२ ॥

ऊरुदेशं[6] तथा जानु[7] जंङ्घा ( ङ्घां ) सन्त्यज्य गच्छति ।
अङ्गुष्ठद्वयमूलं ( ले ) च सूत्रं तद्घटितं भवेत् ॥ ५४३ ॥

अन्य[8]पक्षस्थि[9]ते सूत्रे[10] मूर्धपृष्ठं तु घट्टितम् ।
सार्धाङ्गुलान्तरं कार्यं मस्तकाग्रं विचक्षणैः ॥ ५४४ ॥

सार्धाङ्गुलान्तरं[11]स्तद्वत् केशान्तः पश्चिमो भवेत् ।
स्कन्धदेशः प्रकर्तव्यः पक्षसूत्रेण घट्टितः ॥ ५४५ ॥

पक्षसूत्रस्य कूर्चस्य मध्यं द्व्यङ्गुलसम्मितम् ।
लम्बसूत्रगतश्चैवं निम्नभागः प्रकीर्तितः ॥ ५४६ ॥

अधिकं सूत्रतो यत्तु तदिदानीं निरूप्यते ।
नासाग्रमण्डलं कार्यं ब्रह्मसूत्राद्विनिर्गतम् ॥ ५४७ ॥

[12]कूर्परस्य (श्च) तथा तेन पक्षसूत्रेण घट्टितः ।
पार्ष्णिप्रान्तप्रदेशस्य (श्च) कार्यः सूत्रेण [13]चोदितः ॥ ५४८ ॥

१ A पूर्व। २ A सू। ३ D. च। ४ D अ। ५ F दि। ६ D शगतंजानु, A शे ७। A तुं ८ A स्य। ९ D F तं। १० D F त्रं। ११ A रं १२ F Takes these two lines afte[r] पक्षसूत्रेण घट्टितः। १३ F यो।

मात्रया मात्रिकं कार्यमधिकं स्तनरोहितम् ।
वां[1]ध्रो[2] निम्नः प्रदेशः स्यादधिको दशभिर्यवैः ॥ ५४९ ॥

सूत्रान्मध्यप्रदेशस्तु निर्गतोऽर्धार्धगोलकम् ।
जठरं तस्य वाँ[3]ध्रे[4]स्थमधिकं यवयुग्मतः ॥ ५५० ॥

नाभिरन्ध्रप्रदेशः स्यादधिको द्व्यर्धगोलकम् ।
पक्वाशयस्त[6]स्य गुँप्तेर्भवेद्भागेन निर्गतः ॥ ५५१ ॥

काञ्चीसूत्रप्रदेशस्तु भवेत्त्र्यङ्गुलतोधिकः ।
बस्तिशीर्षप्रदेशस्तु भवेदङ्गुलतोऽधिकः ॥ ५५२ ॥

अधिका द्व्यङ्गुला(:)कार्या(:)सूत्रादङ्गुष्ठको(का)बुधैः ।
यवयुग्माधिके कार्ये प्रदेशिन्यौ[10] च लेखने ॥ ५५३ ॥

अन्यस्य प[11]क्षसूत्रस्य फ[12]लकं गोलकाधिकम् ।
कलया बाहुमू[13]लं स्यात्फलकं द्व्यङ्गु[14]लं ततः ॥ ५५४ ॥

भुजमध्यप्रदेशस्तु पञ्चा(ञ्च)दशयवाधिकः ।
अर्धाङ्गुलाधिकं कार्यं फलकं सुविचक्षणैः ॥ ५५५ ॥

यव(वं)मानक्र[15]माद्धीना रेखा बाह्वोस्तु बाह्यगा ।
यावत्कूर्परकस्थानं तत्र सूत्रेण घट्टिता ॥ ५५६ ॥

कूर्परान्निर्गता काञ्ची जघनं[16] स्फितृ[17]कँ(क्त)टं तथा ।
काञ्ची द्व्यङ्गुलतः कार्या त्र्यङ्गुलं बस्तिमस्तकम् ॥ ५५७ ॥

बस्तिसूत्रप्रदेशः स्याच्चतुर्भिर्नि[18]र्यतोऽङ्गुलैः ।
स्फिजोर्मण्डलभागस्तु क्रमशो यवहीनकः ॥ ५५८ ॥

स्फिजोर्ब[19]न्धप्रदेशस्तु सूत्रादङ्गुलतो[20]ऽधिकः ।
ऊरोर्बाह्यगता रेखा क्रमशः परिहीयते ॥ ५५९ ॥

घटिता जानुसन्धौ तु जंघा स्यादङ्गुलाधिका ।
अधिको निर्गतः कूर्चः कथितः सूत्रयुग्मके ॥ ५६० ॥

---

१ A वीं । २ A ध्र । ३ A द । ४ A ध्र । ५ A कम् । ६ F स्तुध्रेन । ७ A चुर्ले F बुर्ले । ८ A द । ९ D त्र्यं । १० A न्ये । ११ A सूत्रपक्षस्य । १२ B. D. F. फलक्व । १३ A लः । १४ A लान्तकः । १५ D त्रि । १६ B न्य । १७ A कटिं । १८ A स्तिर्य । १९ A बन्धु । २० A को ।

आकारलक्षणं वक्ष्ये प्रमाणेन यथाक्रमम् ।
अर्धमङ्गं प्रदृश्यं स्याद्भित्तिके तन्न दृश्यते ॥ ५६१ ॥

ललाटार्धं भ्रुवोर्लेखा लोचनं श्रवणं तथा ।
नासापुटस्तथा सा(चा)र्धं वाहुरेकस्तथा पुनः ॥ ५६२ ॥

स्फिक्[1]क(क्त)टं सक्थि जङ्घा च दृश्यते पद[2]युग्मकम् ।
एतदेव प्रदृश्यं स्यादन्यद्भित्तिगतं भवेत् ॥ ५६३ ॥

भाग ए[3]को ललाटस्य भ्रूलेखा त्र्यङ्गुला तथा ।
शङ्खप्रदेशकस्तिर्यगङ्गुलत्रयसम्मितम्(तः) ॥ ५६४ ॥

अङ्गुलं कूर्चमूलं स्यान्मात्रामात्रं ततः परम् ।
कथितः पूर्ववत् कर्णः समग्रैः[4] परिलिख्यते ॥ ५६५ ॥

कनिनी लुप्यते नेत्रे करवीरो न दृश्यते ।
पुरतः श्वे[5]तभागोऽपि लुप्यते तत्र भित्तिके ॥ ५६६ ॥

कृष्णमण्डलकस्यार्धं लुप्यते चित्रलेखने ।
दृश्यं सार्धयवद्वन्द्वं मेचके मण्डलेऽर्धतः ॥ ५६७ ॥

अपाङ्गश्वेतभागोऽत्र दृश्यते यवपञ्चकैः[6] ।
कपोलौ[7] गण्डदेशश्च सम्पूर्णः परिदृश्यते ॥ ५६८ ॥

नासिकार्धं[8] प्रदृश्येत गोजिकार्धं तथैव च ।
कलामात्रे प्रदृश्येते[9] दशनच्छदने उभे[10] ॥ ५६९ ॥

हनुमण्डलमर्धं च कलामात्रं प्रदृश्यते ।
ग्रीवा चाष्टाङ्गुला लेख्या चित्रकर्मणि भित्तिके ॥ ५७० ॥

बाहुमूलद्वयस्योर्ध्वं हिक्कासूत्रस्य चोपरि ।
रेखा चापाकृतिर्लेख्या प्रदेशे भुजशीर्षके ॥ ५७१ ॥

हिक्कायामन्व[11](मंस)देशस्य विस्तारस्तालमात्रकः ।
बाहुर्यथोदितः पूर्वं[12] तथैव परिलिख्यते ॥ ५७२ ॥

१ B स्क । २ द्व । ३ A मे । ४ D ग्रं । ५ A श्वे । ६ D कम् । ७ D ले । ८ A र्धे । ९ A त
१० B. F. शु । ११ B. मंश, मङ्ग D अंश । १२ A वैस्त B वंत ।

पताकासन्निवेशेन लिख्यते करपल्लवः ।
चतुर्दशाङ्गुलं मध्यं भुजस्य जठरस्य च ॥ ५७३ ॥

दृश्यते केवलं लिङ्गं मुष्कमूलं च दृश्यते ।
ऊरु जा(र्जा)नु च जङ्घा च लिख्यते ख्यातमानतः ॥ ५७४ ॥

चतुर्दशाङ्गुलं दैर्घ्यं पादयोः परिलिख्यते ।
षडङ्गुलस्तु विस्तारः पूर्वपादस्तु(स्य) लिख्यते ॥ ५७५ ॥

पूर्वपादस्य पृष्ठे तु द्व्यङ्गुलो[1] दृश्यते परम्(रः) ।
अङ्गुष्ठो दृश्यते तत्र तत्परा च प्रदेशिनी ॥ ५७६ ॥

इतरा नैव दृश्यन्ते परभागाङ्घ्रिसंश्रिताः ।
एवं लक्षणमुद्दिष्टं भित्तिकस्य यथाक्रमम् ॥ ५७७ ॥

ऋज्वर्धर्जुक[2]साचीनां द्व्यर्धाक्षे भित्तिकस्य च ।
सूत्रतो लक्षणं प्रोक्तं समयं(ग्रं) सोमभूभुजा ॥ ५७८ ॥

चतुष्प्रकारभित्तीनां वृत्तीनां वच्मि लक्षणम् ।
सूत्रतो मानतश्चापि प्रदेशानां विनिर्णयात् ॥ ५७९ ॥

ऋजुकेऽर्धर्जुके साचीस्थाने द्व्यर्धाक्षिसंज्ञके ।
पक्षसूत्रे तथा प्रोक्ते परावृत्तिष्ठते त(तस्त)था ॥ ५८० ॥

शिखाककाटिकामध्या(त्) पृष्ठवंशा(त्)स्फिग[3]न्तरात् ।
निर्गत्य पार्ष्णिमध्ये तु ब्रह्मसूत्रं प्रतिष्ठितम् ॥ ५८१ ॥

तिर्यक्[4]कर्णागतं(तात्) सूत्रां(त्) शिरश्चन्द्रार्धसन्निभम् ।
षडङ्गुलस्तदुत्सेध आयामस्तु दशाङ्गुलः ॥ ५८२ ॥

तस्मात्सूत्रादधोभागे प्रदेशः केशसंयुतः ।
षडङ्गुलं तस्य दैर्घ्यं विस्तारस्तु दशाङ्गुलः ॥ ५८३ ॥

कर्णमूलप्रदेशे तु विस्तारः स्याद्द्वि(द्व्य)ङ्गुलः? ।
शिरोगतप्रदेशे तु विस्तारस्तु षडङ्गुलः ॥ ५८४ ॥

अधस्तात्कर्णरन्ध्रस्य विस्तारो द्व्यङ्गुलो मतः ।
कर्णौ सार्धाङ्गुलौ दृश्यौ पाल्यौ चाङ्गुलसम्मिते ॥ ५८५ ॥

१ D ले । २ A र्जुसा । ३ D ज । ४ A कार्णाग्रगां B काणाग्रगां । ५ D त्रं ।

[1]चलास्थिहनुविस्तारः सूत्रप्रोक्त ( क्तो ) दशाङ्गुलः ।
ग्रीवा चाष्टाङ्गुला तिर्यग्विस्तारेण निगद्यते ॥ ५८६ ॥

पार्श्वतो ब्रह्मसूत्रस्य कक्षामूले[2] तु नालिके[3] ।
कक्षामूलात्ततो बाह्यबाहोर्लेखा षडङ्गुला ॥ ५८७ ॥

ऋजुवत्सर्वमङ्गस्य अनेनान्य[4]न्निरूपितम् ।
प्रदृश्येत तले तस्मिन् करपल्लवसंस्थिते ॥ ५८८ ॥

गुदस्थाना[5]त् स्फिजो रेखा[6] द्वितीया चन्द्रसन्निभा ।
पक्षसूत्रावधि प्रोक्ते(क्ता) स्फिग्मध्ये बन्धदेशतः ॥ ५८९ ॥

मुष्कौ वृत्ताङ्गुलौ दृश्यौ तदधो लिङ्गमङ्गुलम् ।
ऊर्वोरभ्यन्तरं तत्र भवेदङ्गुलसम्मितम् ॥ ५९० ॥

ऊर्वोर्मध्यप्रदेशे तु भवेद्गोलकमन्तरम् ।
श्रोणिदेशे तथा प्रोक्तमन्तरं चतुरङ्गुलम् ॥ ५९१ ॥

यावत्पार्ष्णिप्रदेशः स्यात्तावदावृ(दीदृ)क्षमन्तरम् ।
भूमिसूत्रे तथा पार्ष्णिः कर्तव्ये(व्यः) सुविचक्षणैः ॥ ५९२ ॥

भूमिसूत्रात्ततो ह्यूर्ध्वं कनिष्ठे सप्तमात्रिके ।
अर्धाङ्गुलाधिकें तस्मिन्ननामे मध्यमे क्रमात् ॥ ५९३ ॥

गुल्फं(ल्फ)देशाद्बहिर्दृश्ये न दृश्या च प्रदेशिनी ।
अङ्गुष्ठे(ष्ठो)ऽपि न दृश्येत जङ्घायाः(ङ्घया) परिगूहितः ॥ ५९४ ॥

ऋजुवृत्तिरिति ख्याता सूत्रमानानुसारतः ।
चित्रकाणां प्रबोधार्थं चित्रं सोममहीभुजा ॥ ५९५ ॥

वृत्तिरर्धर्जुकेदानीं कथ्यते लक्ष्मलक्ष्यते(तः) ।
पक्षसूत्रे प्रकर्तव्ये यथैवार्धर्जुके तथा ॥ ५९६ ॥

चतुरङ्गुलमेकत्र भागद्वितयमन्यतः ।
अर्धर्जुके यथा सूत्रं तद्वत्तद्वृत्तिके भवेत् ॥ ५९७ ॥

---

१ A. व । २ B. लं । ३ B D. तः । ४ D न्येनि । ५ A न B ना । ६ D लेखे ।

ऋजुके मस्तके सूत्रं तद्वद्दृश्यं प्रकल्पयेत् ।
विस्तार इच्छया चैव चूचूभागेति(पि)तद्दिवम् ? ।। ५९८ ।।

ब्रह्मसूत्रात्परे भागे कर्णपाली च दृश्यते ।
पूर्वभागे युतः कर्ण ऋजुवृत्तौ यथा तथा ।। ५९९ ।।

केशान्तमध्यगात्सूत्रात्परि(रे) भागे त्रिमात्रिकः ।
चलास्थिहनुविस्तारः पूर्वाङ्गे प्राङ्गुलो भवेत् ।। ६०० ।।

ब्रह्मसूत्रात्परे भागे ग्रीवा गोलकसम्मिता ।
षडङ्गुला भवेत्पूर्वे विस्तारेण निरूपिता ।। ६०१ ।।

ब्रह्मसूत्रात्परे भागे कक्षामूलं दशाङ्गुलम् ।
तालमानं भवेत्पूर्वे कक्षामूलं तु निश्चितम् ।। ६०२ ।।

कक्षामूलात्परे भागे रेखा वाहोस्तु बाह्यगा ।
षडङ्गुला भवेत्तिर्यग् विस्तारेण प्रमाणतः ।। ६०३ ।।

पुरस्तात्कक्षमूलात्तु रेखा बाह्या तु बाह्यगा[1] ।
सप्तमात्रा भवेत्तिर्यग् विस्तारेण सुनिश्चिता ।। ६०४ ।।

ब्रह्मसूत्रात्परे भागे पूर्ववद्धीयते क्रमात् ।
श्रोणी काञ्चीप्रदेशश्च बस्तिदेशस्तथैव च ।। ६०५ ।।

ब्रह्मसूत्रात्परे भागे स्फिग्रेखा नवे[2]चन्द्रवत् ।
पूर्वभागस्फिजा लुप्तं लेखार्धं परभागिकम् ।। ६०६ ।।

ब्रह्मसूत्रात्परे भागे सक्थि दृश्यं दशाङ्गुलम् ।
पूर्वभागप्रदेशः(गे प्रदृश्यः)स्यात्क(दू)रुदेशस्तु मात्रिकः[3] ।। ६०७ ।।

परे तु मध्यदेशस्तु परभागे द्विभागिकः ।
पूवभागे[4] प्रदृ[5]श्यः(श्यं)स्यात्सार्धमङ्गुलकं स्फुटम् ।। ६०८ ।।

पराङ्गे[6] ब्रह्मसूत्रस्य पुरोभागः प्रदृश्यते ।
अर्धाङ्गुलप्रमाणेन यावत्तलकसङ्गमः ।। ६०९ ।।

समग्रं दृश्यते सक्थि पूर्वपादस्य सङ्गतम् ।
अधस्तादू[7]रुमध्यस्य व्योम जानुव्यवस्थितम् ।। ६१० ।।

१ D या । २ B. D ख । ३ A का । ४ B. F ग । ५ B. F देशः । ६ राग्रे । ७ A दृगु ।

क्रमशो वर्धमानं तु यावत्सार्धाङ्गुलावधि ।
जङ्घयोरन्तरं[1] तद्वत्सार्धमङ्गुलमिष्यते ॥ ६११ ॥

इन्द्रबस्तिप्रदेशे तु किञ्चिदूनं प्रकल्पयेत्[2] ।
लुप्यते परपादेऽस्मिन्नङ्गुष्ठः पादशाखिकः[3] ॥ ६१२ ॥

अधस्ताद्भूमिसूत्रस्य पार्ष्णिः पूर्वपदाश्रिता ।
यवप्रमाणिका[4] दृश्या वृत्तत्वाच्चित्रकर्मणि ॥ ६१३ ॥

अङ्गुष्ठमूलदेशस्य नव(ख)सन्धेर्यद[5]न्तरम् ।
तत्कलामात्रकं कार्यं चित्रकर्मविशारदैः ॥ ६१४ ॥

भूमिसूत्रात्तथाचोर्ध्वं[6] कनिष्ठा कलया स्मृता ।
सर्वाङ्गुल्यस्तथाऽङ्गुष्ठो दृश्यन्ते पूर्वपादगाः ॥ ६१५ ॥

भूमिसूत्रं परित्यज्य पराङ्घ्रेः[7] पार्ष्णिमण्डलम् ।
अङ्गुलेन विधातव्यो भित्तिचित्रे ह्ययं क्रमः ॥ ६१६ ॥

एवमर्धर्जुका वृत्तिः समग्रा परिकीर्तिता ।
क्षयवृद्धिप्रदेशै[8]र्स्तु सूत्रं[9] मानात्सुनिश्चितम् ॥ ६१७ ॥

साचिस्थानगता वृत्तिरिदानीं परिकीर्त्यते ।
सूत्रत्रितयभेदेन पूर्वापरविभागतः ॥ ६१८ ॥

एतासां विगतं[10] स्थाने पक्षसूत्रं विधीयते ।
तद्वत्तद्वृत्तिके कार्यं सूत्रत्रितयपातनम् ॥ ६१९ ॥

ब्रह्मसूत्रात्परे भागे केशान्तश्चाङ्गुलद्वये ।
दशाङ्गुलं[11] शिरःपृष्ठं पूर्वभागे विधीयते ॥ ६२० ॥

परे[12] भागे प्रदृश्यं स्याद्भ्रूयुगं मात्रया मितम् ।
भ्रूपुच्छाच्चैव कर्णाग्रं भागेनैकेन कल्प(ल्प्य)ते ॥ ६२१ ॥

सार्धमङ्गुलमुद्दिष्टा तिर्यक्कर्णस्य विस्तृतिः ।
ततो बहिः प्रदृश्यं स्यात्कर्णपृष्ठं चतुर्यवम् ॥ ६२२ ॥

---

१ D रे। २ A ते। ३ A काः। ४ D ण। ५ D वा। ६ A र्ध्वं। ७ A ङ्घ्रैः। ८ D श
९ A सूत्र। १० D च गते। ११ B. F ले। १२ D. F र।

मात्रामात्रौ प्रकर्तव्या कर्णपाली विचक्षणैः ।
कर्णावर्तात्पुरोभागे सार्धसप्ताङ्गुलं शिरः ॥ ६२३ ॥

पालीदेशात्समारभ्य कृकाटी पङ्क्तिरङ्गुलैः ।
तिर्यङ्मानेन कर्तव्या चित्रकर्मणि कोविदैः ॥ ६२४ ॥

ब्रह्मसूत्रात्परे भागे दृश्या या सार्धमङ्गुलम् ।
यवमात्रमधोवर्त्म पक्षसूत्रात्प्रहीयते ॥ ६२५ ॥

ललाटं च कपोलश्च पक्षसूत्रेण वर्तितम् ।
ब्रह्मसूत्रात्परे भागे कपोले(लो) द्व्यङ्गुले[3] ततः ॥ ६२६ ॥

ब्रह्मसूत्रात्परे भागे पालिसंन्धिस्तु गोलकः ।
ईषद्वक्रा प्रकर्तव्या गण्डलेखा विचक्षणैः ॥ ६२७ ॥

गण्डप्रान्तस्य हन्वाश्च सन्धिःस्यात्पक्षसूत्रतः ।
अङ्गुलान्तरतः कार्यो यवेनैकेन वाधिकः ॥ ६२८ ॥

अङ्गुलेन हनुः कार्या ब्रह्मसूत्रात्परे स्थिता ।
कन्धरा पृष्ठभागस्था हनुश्चापि निरूपिता ॥ ६२९ ॥

दशाङ्गुलं तथा तिर्यग् विस्तारेण परिस्फुटम् ।
गलवृद्धेर्हनुः प्रान्ताद्यवमानेन लम्बते ॥ ६३० ॥

ग्रीवाया गलवृद्धेश्च सन्धिः सार्धाङ्गुलो भवेत् ।
अष्टाङ्गुला भवेद्ग्रीवा ब्रह्मसूत्रपुरःस्थिता ॥ ६३१ ॥

सार्धमङ्गुलकं त्यक्त्वा ब्रह्मसूत्रं व्यवस्थिता ।
ब्रह्मसूत्रात्परे भागे वाध्रः सप्ताङ्गुलो भवेत् ॥ ६३२ ॥

कक्षामूलं परे भागे मात्रया समवस्थितम् ।
कक्षामूलद्वयस्योक्तमन्तरं मनुमात्रया ॥ ६३३ ॥

बाहुमूलगता रेखा बाह्या पञ्चभिरङ्गुलैः ।
ब्रह्मसूत्र(त्रं) परस्थेनं बाहुना परिलोपितम् ॥ ६३४ ॥

---

१ F त्र । २ D कृ । ३ B लं । ४ B. F. ल । ५ A क्षि । ६ A ना... निरूपिता A F हनुस्ता-निनि । ७ A वान्ध्रः, चान्ध्रः F वांध्रं, । ८ A लं । ९ A स्थाने ।

जठरं श्रोणिदेशश्च सक्थ्य[1]र्धं न च[2] दृश्यते ।
तद्बाहुदेशमध्यस्तु[3] रचनीयः षडङ्गुलः ॥ ६३५ ॥

बाहुदेशस्य मध्यस्याप्यन्तरं स्याद्दशाङ्गुलम् ।
इतरस्य तथा बाहोर्मध्यदेशस्य मध्यगः ( गम् ) ॥ ६३६ ॥

[4]अङ्गुलं दृश्यते व्योम यावच्छ्रोणितटं भवेत् ।
प्रकोष्ठकं[5]स्य मध्यस्याप्यन्तरं स्याद्दशाङ्गुलम् ॥ ६३७ ॥

प्रकोष्ठस्तस्य बाहोश्च काञ्चीदेशेन गूहितः ।
अधोभागे(गो) न दृश्येत प्रकोष्ठस्य करावधेः ॥ ६३८ ॥

दृश्या(श्य)बाह्वन्तरच्छा(स्था)या रेखायाः श्रोणिमध्यतः ।
अन्तरं रचनीयं[6] स्याद्दिक्सङ्ख्यैरङ्गुलैः स्फुटम् ॥ ६३९ ॥

काञ्चीसूत्रप्रदेशस्य दृश्यं[7]बाहोर्[8]यदन्तरम् ।
गदितं रविमात्राभिश्चित्रशास्त्रानुसारतः ॥ ६४० ॥

बस्तिमस्तकदेशस्य दृश्या(श्य)बाहोर्यदन्तरम् ।
तिथिमात्राभिरुद्दिष्टं तिर्यक्सूत्रं(त्र) प्रमाणतः ॥ ६४१ ॥

दृश्यस्य मणिबन्धस्य गुदस्य च यदन्तरम् ।
दशाङ्गुलं विधेयं तच्चित्रव्यापारकोविदैः ॥ ६४२ ॥

पूर्ववच्च स्फिजोर्लेखा कर्तव्या सुविचक्षणैः ।
कलामात्रं तथा लुप्ता स्फिजोर्लें[9]खा परस्थिता ॥ ६४३ ॥

त्रिभागलोपितं सक्थि पूर्वसक्थ्युपं[10]रिस्थितम् ।
समग्रो दृश्यते चाङ्घ्रिः पुरोभागसमाश्रितः ॥ ६४४ ॥

ऊरुमूलं तथा जानु जङ्घाकाण्डं तथैव च ।
त्रिभिर्भागैः प्रदृश्येत पराङ्घ्रिसमवस्थितम् ॥ ६४५ ॥

पूर्वाङ्घ्रिकूर्चदेशस्य पराङ्घ्रेर्नखसन्धितः ।
समग्रं दृश्यते बाह्यमङ्गुलार्धं विचक्षणैः ॥ ६४६ ॥

---

१ A च्छा । २ A व । ३ F स्त । ४ B. F द्य । ५ A स्तस्य । ६ A या B य । ७ A श्यं
८ A रि । ९ A ले । १० B क्थिपरिस्थितम् ।

एकादशाङ्गुलं दैर्घ्यं पूर्वपादस्य कल्प्यते ।
घटिता भूमिसूत्रेण पार्ष्णिस्तस्मिन् परिस्फुटम् ॥ ६४७ ॥

सार्धमङ्गुलमुत्सृज्य लि[1]ख्यं[2]ते तु कनिष्ठिका ।
अङ्गुल्यश्च तथाङ्गुष्ठो लि[3]ख्यन्ते पूर्ववत्स्फुटम् ॥ ६४८ ॥

प्रदेशिनी तथाऽङ्गुष्ठो[4] मध्यमा[5]ग्रं तथैव च ।
दृश्यते परपादस्य पू[6]र्वेणान्यत्प्रलुप्यते ॥ ६४९ ॥

परपादगता पार्ष्णिः समग्रां दृश्यते पुनः ।
भूमिसूत्रात्परित्यज्य मानतः सार्धमङ्गुलम् ॥ ६५० ॥

ईदृक्साचिगता वृत्तिः कथिता लक्षणान्विता ।
तिर्यक्सूत्रप्रदेशेन लम्वसूत्रक्रमेण च ॥ ६५१ ॥

द्व्यर्धाक्षिवँ[7]त्प्रकर्तव्यं तथा च लम्वसूत्रकम् ।
[8]ब्रह्मसूत्रात्परे भागे रुद्रमात्राभिरीरितम् ॥ ६५२ ॥

ब्रह्मसूत्रात्परे भागे तालमङ्गुलतो भवेत् ।
पुरोभागे ललाटं तु सार्धमङ्गुलतो भवेत् ॥ ६५३ ॥

कलामात्रा प्रदृश्या स्याद्भ्रुवोर्लेखा सुनिश्चितम् ।
अङ्गुलं तु परे भागे पुरोभागे तथाङ्गुलम् ॥ ६५४ ॥

भ्रूपुच्छतः कर्णमूलं पञ्चाङ्गुलमुदीरितम् ।
कलामात्रो भवेत्कर्णस्तिर्यङ्ग्मानेन निश्चितम् ॥ ६५५ ॥

अर्धपाली परा दृश्या पुरस्था मात्रया मिता ।
पालीदेशाँत्क्रकाटी स्याद्भागेनैकेन कल्पिता ॥ ६५६ ॥

ब्रह्मसूत्रात्परेभागे नेत्रवर्त्म चतुर्यवम् ।
अर्धाङ्गुलं परित्यज्य पक्षसूत्रं प्रतिष्ठितम् ॥ ६५७ ॥

पक्षसूत्रे तु संलग्नं पक्ष्म[11] कार्यं[12] विचक्षणैः ।
ब्रह्मसूत्रात्परे भागे दृश्यते कृष्णमण्डलम् ॥ ६५८ ॥

---

१ A ले। २ F ख। ३ A ले। ४ F ष्ठां। ५ A यां। ६ D प्रो। ७ D तत्। ८ F लम्ब।
९ A यद्गू F यङ्गू। १० D शङ्क। ११ A क्ष। १२ D, F यैं।

यवद्वयप्रमाणेन श्वेतभागच( श्च )तुर्यवम् ।
ब्रह्मसूत्रात्परे भागे बुध( ध्र )वर्त्म चतुर्यवम् ॥ ६५९ ॥

[1]परे [2]भागे प्रदृश्यःस्यात्कपोलश्च चतुर्यवः ।
अ[3]र्धमात्रात्कपोलात्तु नासामध्यं प्रकल्प्यते ॥ ६६० ॥

पक्ष्मसूत्राद्विनिष्क्रान्तं नासाग्रं तु चतुर्यवम् ।
ओ[4]ष्टौ(ष्ठौ) तत्र प्रकर्तव्यौ तिर्यगङ्गुलविस्तृतौ ॥ ६६१ ॥

घटितौ पक्ष[5]सूत्रेण प्रकर्तव्यौ विचक्षणैः ।
ब्रह्मसूत्रात्परे भागे चिबुकं द्वियवं भवेत् ॥ ६६२ ॥

घटितं ब्रह्मसूत्रेण हनुचक्रं प्रकल्[6]पयेत् ।
हनुचक्रात्तथा ग्रीवा भागेनार्धेन कल्प(ल्प्य)ते ॥ ६६३ ॥

ग्रीवायाश्चैव विस्तारो भागद्वितयसम्मितः ।
ग्रीवायाश्च बहिर्दृश्यः स्कन्धदेशस्तथाङ्गुलम् ॥ ६६४ ॥

ब्रह्मसूत्रात्परे[7] भागे[8] बाहुमूलं त्रिमात्रकम् ।
पञ्चमात्रं पुरोभागे कक्षामूलं विधीयते ॥ ६६५ ॥

द्विकक्षामूलयोर्मध्ये भवेदेकादशाङ्गुलम् ।
उक्तादन्यः पुरो बाहुः कक्षामूलानु(त्तु)भागतः ॥ ६६६ ॥

कूर्परस्यान्तरी रेखा श्रोणिदेशे निगद्यते ।
तस्याश्च मध्यरेखाया अन्तरं संव्यवस्थितम् ॥ ६६७ ॥

चापाकारं प्रकर्तव्यं तत्सार्धाङ्गुलविस्तृतिः( ति ) ।
बाहोस्तस्य बहिर्लेखा बस्तिशीर्षेण घट्टिता ॥ ६६८ ॥

परपादस्फिजा गूढः प्रकोष्ठो नैव दृश्यते ।
पूर्वेण पक्षसूत्रेण पृष्ठपार्श्वं सुघट्टितम् ॥ ६६९ ॥

तेनैव घटि[9]तौ रेखा स्फिजोरन्तरवर्तिनी ।
बस्तिशीर्ष[10]गतं सूत्रं गुदराजे[11]र्द्विगोलकम् ॥ ६७० ॥

१ F omits this line. २ A B र । ३ A ऊध्व । ४ A अ । ५ A क्षि । ६ A ल्पते । ७
८ F गो । ९ D न घट्यते । १० D द्वि । ११ B र्जो ।

स्फिङ्मण्डलगता रेखा बाह्या पञ्चाङ्गुला भवेत् ।
यवतो वर्धते यावत् कल्पितं नाभिसूत्रकम् ॥ ६७१ ॥

कूर्परस्य तथा नाभेरन्तरं सार्धगोलकम् ।
भुजं विना शिरोदेशान्निर्गतं जठरं बहिः ॥ ६७२ ॥

हीयते च ततश्चाधो मणिबन्धावधि क्रमात् ।
बस्तिसूत्रप्रदेशे तु यवषट्कमुदाहृतम् ॥ ६७३ ॥

ततो वंक्षणदेशः स्यादङ्गुलं परिकल्पितम्(तः) ।
ऊरुमूलं ततः कुर्यात्करादङ्गुलतो बहिः ॥ ६७४ ॥

कनिष्ठाङ्गुलिसंलग्ना सक्थिरेखा विरच्यते ।
तर्जनी दृश्यते चार्धमङ्गुलाग्रेण सङ्गता ॥ ६७५ ॥

तिर्यक्त[3]लस्य विस्तारो(रं) भागेनैकेन कल्पयेत् ।
पूर्वभागस्फिजोर्ले(ले)खा किञ्चिद्वक्रा प्रकल्प(ल्प्य)ते ॥ ६७६ ॥

गुदात्सार्धाङ्गुला सा तु प्रदृश्या चित्रकर्मणि ।
समग्रो[4] दृश्यते चाङ्घ्रिः पूर्वभागसमाश्रितः ॥ ६७७ ॥

त्रयोदशाङ्गुलायामं पदं तस्य प्रदृश्यते ।
परभागस्थितं सक्थि सार्धभागं प्रदृश्यते ॥ ६७८ ॥

जानुभागो हि भागेन जङ्घामूलं च भागतः ।
ईन्द्रबस्तिप्रदेशस्य दृश्यं स्यादङ्गुलत्रयम् ॥ ६७९ ॥

कूर्चिकां च ततः पार्ष्णिः प्रत्येकं त्र्यङ्गुल मतम्[10] ।
पूर्वपादे[11]गता पार्ष्णिर्भूमिसूत्रेण घट्टिता ॥ ६८० ॥

भूमिसूत्रं परित्यज्य कनिष्ठा मात्रया भवेत् ।
भूमिसूत्रं परित्यज्य परपार्ष्णिर्विधीयते ॥ ६८१ ॥

सार्धगोलकमानेन चित्रकर्मविशारदैः ।
पूर्वाङ्घ्रिपृष्ठदेशे[12] च परपादः प्रदृश्यते ॥ ६८२ ॥

१ वृष ? । २ P वि । ३ D क । ४ D ग्रा । ५ D ता । ६ B. D वस्ति । ७ D गः । ८ B. D ईदृक् । ९ F ता । १० B. F मतो । ११ D दे ग । १२ D शं ।

पञ्चाङ्गुलकृतायामः[1] शिल्पिभिः परिकल्पितः[2]।
पूर्वाङ्गुष्ठनखादूर्ध्वं कल्प्यते[3] च प्रदेशिनी ॥ ६८३ ॥

अङ्गुलान्तरिता कार्या पराङ्गुष्ठेन गूहिता।
तर्जनी मध्यमानाम( मा ) कनिष्ठा च क्रमादिमाः ॥ ६८४ ॥

उपर्युपरि तिष्ठन्त्यः कल्प(ल्प्य)न्ते चार्धरूपतः।
एवं द्व्यर्धक्रमा[4] वृत्तिर्विस्तारेण निरूपिता ॥ ६८५ ॥

लम्बसूत्रं पुरस्कृत्य तिर्यक्सूत्रानुसारतः।

इति सामान्यचित्रप्रक्रिया

स्थानकानाञ्च वृत्तीनां यत्प्रमाणं निरूपितम् ॥ ६८६ ॥

तदन्तरप्रमाणेन व्यन्तराणि भवन्ति हि।
नवभेदप्रभिन्नानां स्थानकानां विनिर्णयः ॥ ६८७ ॥

आयुधानां विपर्यासाच्चतुर्ष्वपि च बाहुषु।
जगन्नाथस्य वक्ष्यन्ते चतुर्विंशतिमूर्तयः ॥ ६८८ ॥

प्रादक्षिण्येन बोद्धव्या[5] चतुर्विंशतिमूर्तयः।
अधोहस्तक्रमेणादौ यथैवाक्षरसंज्ञया ॥ ६८९ ॥

अवशिष्टमधोबाहोश्चतुर्थं नामवाचकम्।
प्राधान्यं व्यञ्जनेष्वेव दीर्घानुस्वारयोर्बहिः ॥ ६९० ॥

छन्दसः पूरणार्थाय क्वचिदाद्यं प्रलुप्यते।
पशचंके शपंगाना गाचशंमा चगापगो ॥ ६९१ ॥

गोपशंवि चशंपाम पागचात्रि शचागवा।
पंचांगश्री गचंपाह शपचाप पशागदा ॥ ६९२ ॥

गशापाशं(सं) गशाचंवा चशगाप्र चगाशनि।
चंपाशंपु पगाचा(शा)धो चंपागोनृ गपाचतुः ( चु ) ॥ ६९३ ॥

पाचशंजं शगाचो पि शोचपाह शगापक्रं।
चतुर्बाहुयुताः सर्वाः मूर्तयः परिकीर्तिताः ॥ ६९४ ॥

इति केशवादिचतुर्विंशतिमूर्तिभेदाः।

१ D मा। २ D ता। ३ D ल्प। ४ A द्यर्धात्क्रमा वृत्तिः। ५ A वोद्ध०। ६ A चं। ७ B. F. [illegible]
८ F वोशो। ९ A क्ष।

अष्टबाहोर्हरेर्मूर्तेरायुधानि वदाम्यहम् ।
नन्दकश्च गदा बाण(ः) पद्म(द्मं)दक्षिणबाहुषु ॥ ६९५ ॥

शङ्खो धनुस्तथा चक्रं खेटकं वामबाहुषु ।
त्रिविक्रमो नृसिंहश्च दशतालौ प्रकीर्तितौ ॥ ६९६ ॥

वामनः सप्ततालस्तु विप्रमूर्तिर्ह[1]रिच्छविः ।
कृष्णाजिनोपवीती स्याच्छत्री धृतकमण्डलुः ॥ ६९७ ॥

कुण्डली शिखया युक्तः कुब्जाकारो मनोहरः ।
श्रीरामश्च वराहश्च दशतालावुदाहृतौ ॥ ६९८ ॥

रामस्तु द्विभुजो लेख्यः शरचापधरो विभुः ।
नृवराहं प्रवक्ष्यामि सूकरास्येन शोभितम् ॥ ६९९ ॥

गदापद्मधरं धात्रीं दंष्ट्राग्रेण समुद्धृताम् ।
बिभ्राणं कूर्परे वामे विस्मयोत्फु[2]ल्ललोचना[3]म् ॥ ७०० ॥

नीलोत्पलधरां देवीमुपरिष्टात्प्रकल्पते(येत्) ।
दक्षिणं कटिसंस्थं च बाहुं तस्याः प्रकल्पयेत् ॥ ७०१ ॥

कूर्मपृष्ठे पदं चैकमन्यन्नागेन्द्रमूर्धनि ।
अथवा सूकराकारं महाकायं क्वचिल्लिखेत् ॥ ७०२ ॥

तीक्ष्णदंष्ट्राग्रघोणास्यं स्तब्धकर्णोर्ध्वरोमकम् ।
नरसिंहाकृतिं वक्ष्ये रौद्रसिंहमुखेक्षण(णा)म् ॥ ७०३ ॥

भुजाष्टकसमायुक्तं(क्तां)स्त[4]ब्ध पानसयत्प्रभुम् (पीतसटाप्रभाम्) ।
हिरण्यकशिपुं दैत्यं दारयन्तीं नखाङ्कुरैः ॥ ७०४ ॥

ऊर्वोरुपरि विन्यस्य खड्गखेटकधारिणीम्[6] ।
तस्यान्त्रमालां निष्कृष्य बाहुयुग्मेन बिभ्रतीम् ॥ ७०५ ॥

आकारं पुरुषस्यैव धारयन्तीं[7] मनोहराम् ।
अधःस्थिताभ्यां बाहुभ्यां धा(दा)रयन्तीं प्रकल्पयेत् ॥ ७०६ ॥

१ A ह । २ A त्तु । ३ D न । ४ D तज्जपीनसयत्प्रभम् । ५ A न्तं F न्ती । ६ A णं F णी । ७ F न्ती ।

ऊर्ध्वस्थिताभ्यां बाहुभ्यामान्त्रमालां तु बिभ्रतीम्।
मध्यस्थिताभ्यां बाहुभ्यां दक्षिणे चक्रपङ्कजे ॥ ७०७ ॥

कौमोदकीं तथा शङ्खं बाहुभ्यामभिवामतः।
नीलोत्पलदलच्छायां किंवा चम्पकसप्रभाम् ॥ ७०८ ॥

तप्तकाञ्चनसङ्काशां बालार्कसदृशीं लिखेत्।
आसीनं द्विभुजं देवं प्रसन्नवदनेक्षणम् ॥ ७०९ ॥

श्वेतस्फटिकसङ्काशं चतुर्बाहुमथापि वा।
आजानुलम्बिनौ बाहू कर्तव्यौ तत्र दक्षिणौ[१] ॥ ७१० ॥

समीपे कल्पयेच्चक्रं वामे शङ्खं समीपतः।
ऊर्ध्वस्थिताभ्यां बाहुभ्यां दक्षिणं(णे) पञ्चकं(पङ्कजं)न्यसेत् ॥ ७११ ॥

वामे[२] बाहौ गदा रम्यां लिखेच्चित्रविशारदः।
तथा त्रिविक्रमं वक्ष्ये वामपादेन मेदिनीम् ॥ ७१२ ॥

आक्रामन्तं द्वितीयेन साकल्येन नभस्तलम्।
ऊर्ध्वपादसमीपस्थं वामनं दीनलोचनम् ॥ ७१३ ॥

आलिखेत समीपस्थं बालिं शृ(भृ)ङ्गारधारिणम्।
तस्य बन्धं प्रकुर्वन्ति(र्वन्तं) गगनान्तं प्रकल्पयेत् ॥ ७१४ ॥

मत्स्यावतारिणं देवं मत्स्याकारं प्रकल्पयेत्।
कूर्मावतारिणं देवं कमठाकृतिमालिखेत् ॥ ७१५ ॥

लिखेच्चतुर्मुखं देवं चतुर्बाहुं शुभेक्षणम्।
रक्तकुण्डलसंयुक्तं लम्बकूर्चोपवीतिनम् ॥ ७१६ ॥

कृष्णाजिनधरं देवं शुक्लाम्बरविराजितम्।
दक्षिणं वरदं हस्तं तथान्यं[३] स्तु(स्रु)वधारिणम् ॥ ७१७ ॥

कमण्डलुधरं वा[४]मं तथान्यं संयुतं स्रु[५]च(स्रुचा)।
बिभ्राणं चतु[६]रो वेदान् पुरतश्चास्य विन्यसेत् ॥ ७१८ ॥

---

१ F णे। २ A म। ३ D न्यत्सूत्र B न्यं सूत्र। ४ A देवं। ५ B. D. स्तथा। ६ F पु

वामे पार्श्वे तु सावित्रीं दक्षिणे तु सरस्वतीम् ।
आज्यस्थालीं पुरोभागे महर्षींश्च[1] समन्ततः ॥ ७१९ ॥

हंसारूढं लिखेत्क्वापि[2] क्वचिच्च कमलासनम् ।
स्रष्टारं सर्वलोकानां ब्रह्माणं परिकल्पयेत् ॥ ७२० ॥

महादेवं प्रवक्ष्यामि यथा लेख्यः स भित्तिषु ।
मुक्तार्करश्मिसङ्काशस्तप्तस्वर्णनिभोऽपि वा ॥ ७२१ ॥

उन्नतांसो महाबाहुः कमलायतलोचनः ।
द्वीपिचर्मपरीधानो वृत्तजङ्घोरुमण्डलः ॥ ७२२ ॥

केयूरहारसम्पन्नः कटिसूत्रत्र[3]यान्वितः ।
नवेन्दुकलिकाक्रान्तजटाजूटविराजितः ॥ ७२३ ॥

इन्दुमू(शू)लत्रिनेत्रे(त्रै)णनागाभरणभूषितः ।
द्व्यष्टवर्षदेशीयो नीलकण्ठो मनोहरः ॥ ७२४ ॥

कुण्डली पीनगण्डः स्यादष्टभिर्बाहुभिर्युतः ।
दशभिर्बाहुभिर्वाथ भुजैः षोडशभिः क्वचित् ॥ ७२५ ॥

अष्टादशभुजः क्वापि चतुर्बाहुरथापि वा ।
तेषु शस्त्राणि वक्ष्यामि भुजेषु च यथाक्रमम् ॥ ७२६ ॥

अक्षमालामसिं शक्तिं दण्डं शूलं च दक्षिणे ।
खट्वाङ्गं भुजगं चैव कपालं खेटकं तथा ॥ ७२७ ॥

वरदं च तथा हस्तं वामभागे निवेशयेत् ।
गजासुरवधे नाट्ये बाहुभिर्दशभिर्युतः ॥ ७२८ ॥

पुरत्रयस्य दहने भुजैःषोडशभिर्युतः ।
बाणश्चक्रं गदा चैव दक्षिणेप्यधिकं भवेत् ॥ ७२९ ॥

धनुश्चैव तथा घण्टा शङ्खो वामेऽधिकं भवेत् ।
दश पूर्वं भुजाः प्रोक्ताः षोडशैवं निरूपिताः ॥ ७३० ॥

स्वच्छन्दभैरवाकारे[5] बाहवोऽष्टा[6]दश स्मृताः ।
डमरुं च तथा शङ्कु[7]मधिकं तत्र कल्पयेत् ॥ ७३१ ॥

---

१ B र्षीभिः । २ A त्का । ३ A त । ४ A स । ५ D रैः । ६ A ष्ट । ७ B F मधिके A ङ्कुंत्र्य ।

त्रिशूलं डमरुं चैव वरदं चाक्षिमालिकाम् ।
चतुर्बाहोर्महेशस्य शान्तमूर्तेः समालिखेत् ॥ ७३२ ॥

अन्यास्तु दशहस्तस्य भवेयुर्हेतयः क्रमात् ।
अष्टबाहोर्महेशस्य न स्यातां खड्गखेटकौ ॥ ७३३ ॥

अर्धनारीश्वरो देवः कथ्यते लक्षणान्वितः ।
दक्षिणं पुरुषाकारं वामं योषिन्मयं वपुः ॥ ७३४ ॥

त्रिशूलं दक्षिणे हस्ते वामहस्ते च दर्पणम् ।
उत्पलं वा प्रकुर्वीत केयूरवलयान्वितम् ॥ ७३५ ॥

दक्षिणे श्रवणे नागं वामे कर्णे तु कुण्डलम् ।
जटाभारो दक्षिणे स्यादर्ध(थ)चन्द्रार्धभूषितः ॥ ७३६ ॥

कुन्तले[१][२] कबरीभारं वामभागे तु विन्यसेत् ।
ललाटे लोचनस्यार्धं तिलकार्धं प्रकल्पयेत् ॥ ७३७ ॥

विशालं दक्षिणं[३] वक्षो वामं[४] पीनपयोधरम् ।
द्वीपिचर्मपरीधानं कटिसूत्रत्रयान्वितम् ॥ ७३८ ॥

देवस्य दक्षिणं पादं पद्मस्योपरि कल्पयेत् ।
तस्योर्ध्वं च तथा वामं नूपुरालङ्कृतं लिखेत ॥ ७३९ ॥

नरनारीमयं देवमेवं[५] चित्रे प्रकल्पयेत् ।
उमामहेश्वरस्यापि स्वरूपं वर्ण्यतेऽधुना ॥ ७४० ॥

द्विभुजं वा चतुर्बाहुं जटामण्डलमण्डितम् ।
त्रिनेत्रं पार्वतीस्कन्धविन्यस्तैककरं कुचे ॥ ७४१ ॥

करं द्वितीयं सव्ये[६] तु शूलमुत्पलकं लिखेत् ।
वामं पद्मासनं पादं दक्षिणं किञ्चिदञ्चितम् ॥ ७४२ ॥

एवमर्धेन्दुसंस्थाने निविष्टं शङ्करं लिखेत् ।
वामोरुवर्तिनीं देवीं हरवक्त्रावलोकिनीम् ॥ ७४३ ॥

स्पृशन्तीं देवदेवस्य वामांसं लीलया लिखेत् ।
दक्षिणैः करजैः स्कन्धं स्पृशन्तीं कुक्षिमेव वा ॥ ७४४ ॥

---

१ B. F. ण्ड । २ A लात् । ३ F णे । ४ D मे । ५ A स्यार्धं ६ D वं सर्वदा । ७ A ल्ये B ल्ले ।

उत्पलं वामहस्तेन दर्पणं वापि बिभ्रतीम् ।
जयां च विजयां पार्श्वे गणेशं षण्मुखं लिखेत् ॥ ७४५ ॥

उमामहेश्वरस्यैवं स्वरूपं परिकीर्त्तितम् ।
देवं हरिहरं वक्ष्ये सर्वपातकनाशनम् ॥ ७४६ ॥

दक्षिणे शङ्करस्यार्धमर्धं विष्णोश्च वामतः ।
बालेन्दुभूषितः कार्यो जटाभारस्तु दक्षिणे ॥ ७४७ ॥

नानारत्नमयं दिव्यं किरीटं वामभागतः ।
दक्षिणं सर्पराजेन भूषितं कर्णमालिखेत् ॥ ७४८ ॥

मकराकारकं दिव्यं कुण्डलं वामकर्णतः ।
वरदो दक्षिणो हस्तो द्वितीयः शूलभृत्तथा ॥ ७४९ ॥

कर्तव्यौ वामभागे तु शङ्खचक्रधरौ करौ ।
दक्षिणं वसनं कार्यं द्वीपिचर्ममयं शुभम् ॥ ७५० ॥

पीताम्बरमयं [1]भव्यं जघनं सव्यमालिखेत् ।
वामः पादः प्रकर्तव्यो नानारत्नविभूषितः ॥ ७५१ ॥

दक्षिणाङ्घ्रिः प्रकर्तव्यो भुजगेन्द्रेण वेष्टितः ।
सुधांशुधवलः कार्यः शिवभागो विचक्षणैः ॥ ७५२ ॥

अतसीपुष्पसङ्काशो विष्णुभागो विरच्यते ।
विलिखेत् षण्मुखं देवं मयूरवरवाहनम् ॥ ७५३ ॥

तरुणादित्यसङ्काशं बालाभरणभूषितम् ।
स्थानीये खेटके वापि कुमारो लिख्यते यदा ॥ ७५४ ॥

भुजान्द्वादश कुर्वीत खेटके चतुरो भुजान् ।
ग्रामे [2]वने द्विबाहुः [3]स्याल्लेखनीयो विचक्षणैः ॥ ७५५ ॥

षड्भिः षड्भिरुपेतो वा मुखेनैकेन वा युतः ।
दक्षिणं नि[4]म्नगं पाणिं वरदं वाऽभयं लिखेत् ॥ ७५६ ॥

१ A वि । २ A द्विबाहुःस्याल्लेख्यः । ३ F ग्रामे द्विबाहुर्लेख्यःस्यात् । ४ A भुग्नं ।

शक्तिं पाशमासिं बाणं शूलं चेत्युत्तरोत्तरम् ।
पताकां कार्मुकं कुर्यात्खेटकं मुष्टिबन्धनम् ॥ ७५७ ॥

प्रसृतां तर्जनीं पाणौ ताम्रचूडं च[1] वामतः ।
[2]अभयो [3]वरदो वैको द्वितीयः खड्गभृत्करः ॥ ७५८ ॥

दक्षिणे[4] वामतः शक्ति(:) पाशो वा कुक्कुटोऽपि वा ।
द्विभुजस्य कुमारस्य कर(रे)शक्तिर्विधीयते ॥ ७५९ ॥

दक्षिणे वामतः कार्यस्ताम्रचूडधरः करः ।

इति स्वामिकार्तिकलक्षणम् ।

विनायकस्य वक्ष्यामि मूर्तिं चित्रोपयोगिनीम् ॥ ७६० ॥

गजवक्त्रां त्रिनेत्रां तां चतुर्बाहुं[5] महोदराम् ।
भग्नैकदन्तसंयुक्तां स्तब्धकर्णां समालिखेत् ॥ ७६१ ॥

नागोपवीतिनीं[6] पुष्टां[7] पीनस्कन्धाङ्घ्रिपाणिकाम् ।
भग्नदन्तधरश्चैकमन्यमुत्पलसंयुतं[8]म् ॥ ७६२ ॥

दक्षिणे विलिखेद्वामौ सकुठारसलड्डुकौ ।
पार्श्वे सिद्धिकबुद्धिभ्यामधस्तादाखुनान्वित( ता )म् ॥ ७६३ ॥

आसीन( ना )मुत्तमे पीठे सिन्दूरारुणविग्रह(हा)म् ।

इति गणेशमूर्तिः ।

वक्ष्ये कात्यायनीं देवीं शिवनारायणात्मिकाम् ॥ ७६४ ॥

बाहुभिर्दशभिर्युक्तां जटामुकुटमाण्डिताम् ।
लोचनत्रयसंयुक्तामर्धेन्दुकृतशेखराम् ॥ ७६५ ॥

अतसीपुष्पसच्छायामिन्दीवरदलेक्षणाम् ।
पीनोन्नतकुचाभोगां तनुमध्येन शोभिताम् ॥ ७६६ ॥

त्रिभङ्गि[10]स्थानसंस्थानां महिषासुरमर्दि[11]नीम् ।
त्रिशूलं दक्षिणे खड्गं चक्रं शक्तिं[12] वरं तथा ॥ ७६७ ॥

१ B D तमग्रतः । २ A उ । ३ A वैरदो वैको । ४ A णो । ५ D हु । ६ D नं । ७ D
८ D कम् । ९ A ता । १० A ङ्गी । ११ F र्दे । १२ D क्तिधरं ।

अधि[1]ज्यै[2]कार्मुकं वामे पाशमङ्कुशखेटकम् ।
घण्टां वा परशुं वापि धारयन्तीं समालिखेत् ॥ ७६८ ॥

अधस्तान्महिषं तस्याश्छिन्नग्रीवं समालिखेत् ।
छिन्नस्थानं(न) समुत्पन्नं खड्गखेटकधारिणम् ॥ ७६९ ॥

हृदि शूलेन निर्भिन्नं रुधिरारुणविग्रहम् ।
प्रबद्धं नागपाशेन भ्रुकुटीभीषणेक्षणम् ॥ ७७० ॥

नाभेरूर्ध्वं विनिष्क्रान्तं दा[3]रुणं पुँ[4]रुषं लिखेत् ।
दक्षिणं चरणं देव्याः सिंहपृष्ठे प्रतिष्ठितम् ॥ ७७१ ॥

उत्तुङ्गमश्चितं वामं महिषस्योपरिस्थितम् ।

इति काली ( कात्यायनी ) मूर्तिः ॥

सुरराजं प्रवक्ष्येऽहमैरावणसमाश्रितम् ॥ ७७२ ॥

किरीटकुण्डलधरं भुजद्वयसमन्वितम् ।
कुलिशं दक्षिणे पाणौ वामहस्ते तथोत्पलम् ॥ ७७३ ॥

दिव्यरत्नविभूषाढ्यं दिव्यचीनांशुकैर्युतम् ।
छत्रचामरधारिण्यै[5]ः स्त्रियै[6]ः पार्श्वे च कल्पयेत् ॥ ७७४ ॥

सिंहासनस्थमथवा लिखेद्गन्धर्वसंयुतम् ।
इन्द्राणीं वामतस्तस्य लिखेदुत्पलधा[7]रिणीम् ॥ ७७५ ॥

दिव्यश्रृङ्गारसंयुक्तामिन्द्रवक्त्रावलोकिनीम् ।

इति इन्द्रमूर्तिः ॥

वन्हेः स्वरूपं वक्ष्यामि शुद्धकाञ्चनसप्रभम् ॥ ७७६ ॥

अर्धचन्द्रासनगतं रक्तवस्त्रविराजितम् ।
लोहितं च प्रकुर्वीत बालार्कसमतेजसम् ॥ ७७७ ॥

युक्तं यज्ञोपवीतेन लम्बकूर्चे[9]न शोभितम् ।
मेषपृ[10]ष्ठंस्थितं देवं भुजद्वयसमन्वितम् ॥ ७७८ ॥

---

१ A धृ? । २ A ध्यं D ज्यं। ३ D दानवं । ४ D दारुणं । ५ D F ण्यौ । ६ D F यौ ।
७ D चा । ८ D नव । ९ D र्चौप । १० F ष्ठि ।

दक्षिणे त्वक्षसूत्रं स्यात्करे वामे कमण्डलुम् ( लुः ) ।
स्वाहादेवी तु तत्पार्श्वे कुङ्कुमेन विलेपिता ॥ ७७९ ॥

अरुणैरम्बरैर्भव्या[1] लेख्या माणिक्यभूषिता ।
कुण्डस्थो वा प्रकर्तव्यो हव्यवाहो विचक्षणैः ॥ ७८० ॥

ज्वालाभिः सप्तभिः शीर्षे[2] शोभमानो महाद्युतिः ।

इति अग्निमूर्तिः ।

पितृराजं प्रवक्ष्यामि नीलाञ्जनसमच्छविम् ॥ ७८१ ॥

दण्डपार्श्वधरं दोर्भ्यां प्रदीप्ताग्निवि[3]लोचनम् ।
महामहिषमारूढं सिंहासनमथापि वा ॥ ७८२ ॥

मृत्युना चित्रगुप्तेन पार्श्वयोरुपशोभितम् ।
करालैः किङ्करैश्चैव सुरासुरगणैस्तथा ॥ ७८३ ॥

धर्मिभिः पापिभिश्चैव सेव्यमानं निरन्तरम् ।

इति यममूर्तिः ।

राक्षसेन्द्रं प्रवक्ष्यामि निर्ऋतं ( तिं ) नै[4]र्ऋतेः ( ती ) स्थितम् ॥ ७८४ ॥
नरयानसमारूढं रक्षोभिर्बहुभिर्वृतम् ।
कालमेष ( घ ) समाभासं खड्गखेटकधारिणम् ॥ ७८५ ॥

पीतवस्त्रपरीधानं स्वर्णभूषणभूषितम् ।

इति राक्षसेन्द्रमूर्तिः ।

जलेशं वर्णयिष्यामि कुन्दशङ्खेन्दुसप्रभम् ॥ ७८६ ॥

पाशपङ्कजहस्तं च मकरस्योपरिस्थितम् ।
शुक्लाम्बरपरीधानं दिव्यरत्नकिरीटिनम् ॥ ७८७ ॥

पृथुवक्षस्थलन्यस्ततारहारविभूषितम् ।

इति वरुणमूर्तिः

समीरणं प्रवक्ष्यामि धूम्रं हरिणवाहनम् ॥ ७८८ ॥

---

१ D अरुणारुणसङ्काशा । २ A र्षैः । ३ B D त्रि । ४ B नि ।

चित्राम्बरधरं देवं चित्ररत्नविभूषितम् ।
वरदं दक्षिणं हस्तं वामं युक्तं पताकया ॥ ७८९ ॥

बिभ्राणं कुण्डलोपेतं किरीटवरधारिणम् ।

इति वायुमूर्तिः

हरमित्रं प्रवक्ष्यामि दिव्यहारविभूषितम् ॥ ७९० ॥

किरीटकुण्डलयुतं श्वेताम्बरविराजितम् ।
नरयुक्तविमानस्थं गदापाणिं वरप्रदम् ॥ ७९१ ॥

महोदरं महाबाहुं गौरवर्णं मनोहरम् ।
अष्टाभिर्निधिभिर्युक्तं द्रविणव्यग्रपाणिभिः ॥ ७९२ ॥

समन्ताद्गुह्यकैर्युक्तं चित्रकर्मणि[1] लेखयेत् ।

इति कुबेरमूर्तिः ।

ईशानं सम्प्रवक्ष्यामि शरदभ्रसमप्रभम् ॥ ७९३ ॥

शुभ्रं वृषभमारूढं बालेन्दुकृतशेखरम् ।
जयमङ्गलभूषाढ्यं लोचनत्रयभूषितम् ॥ ७९४ ॥

त्रिशूलपाणिं वरदं व्याघ्रचर्माम्बरावृतम् ।
फणिकुण्डलभूषाढ्यं नागयज्ञोपवीतिनम् ॥ ७९५ ॥

लिखेदेवंविधं देवं चित्रके चित्रकोविदः ।

इति ईशानमूर्तिः

मातॄणां लक्षणं वक्ष्ये ब्रह्माणी वैष्णवी तथा ॥ ७९६ ॥

माहेश्वरी च कौमारी वाराही वासवी तथा ।
सप्तमी नारसिंही च तत्तद्रूपायुधैः समाः ॥ ७९७ ॥

तत्तद्वाहनसंयुक्ताः कर्तव्या मातरो बुधैः ।
वीरेश्वरो[2] विधातव्यो मातॄणामग्रतस्तथा ॥ ७९८ ॥

---

१ A र्मवि । २ A रश्व ।

वीणात्रिशूलहस्तश्च वृषारूढो जटाधरः ।

इति मातृकावर्णनम्

श्रियं देवीं प्रवक्ष्यामि नवयौवनशालिनीम् ॥ ७९९ ॥

सुलोचनां चारुवक्त्रां गौराङ्गीमरुणाधराम् ।
सीमन्तं बिभ्रतीं शीर्षे मणिकुण्डलधारिणीम् ॥ ८०० ॥

श्रीफलं दक्षिणे पाणौ वामे पद्मं तु बिभ्रतीम् ।
श्वेतपद्मासनासीनां श्वेतवस्त्रविभूषिताम् ॥ ८०१ ॥

कञ्चुकाबद्धगात्रीं[1] च मुक्ताहारविभूषिताम् ।
चामरैर्वीज्यमानां च योषिद्भ्यां पार्श्वयोर्द्वयोः ॥ ८०२ ॥

सामगैस्तोष्यमानां ( णां ) च भृङ्गारसलिलोत्करैः ।

इति श्रीमूर्तिलक्षणम् ।

नागानां वक्ष्यते रूपं नाभेरूर्ध्वं नराकृतिः ॥ ८०३ ॥

सर्पाकारमधोभागे मस्तके[2] योगमण्डलम् ।
एका फणा त्रयो वापि पञ्च वा सप्त वा नव ॥ ८०४ ॥

द्विजिह्वास्ते विधातव्याः खड्गचर्मधरौ करौ ।

इति नागमूर्तिः ।

किरीट[3]कुण्डलोपेता वक्र[4]दंष्ट्रा भयानका ॥ ८०५ ॥

नानाशस्त्रधराः कार्याः दैत्याः सुरगणद्विषः ।
दानवा विकृताकारा भ्रुकुटीकुटिलाननाः ॥ ८०६ ॥

किरीटेन च कुब्जेन मण्डिताः शस्त्रपाणयः ।
दंष्ट्राकरालवदना भ्रुकुटीकुटिलेक्षणाः ॥ ८०७ ॥

नानारूपा महाकाया नानाशस्त्रधरास्तथा ।
कुटिलाः कृष्णमेघाभाः स्थूलबाहुमहोदराः ॥ ८०८ ॥

उत्फुल्ला नासिका कार्या लेखने चित्रकोविदैः ।
अत्यर्थं कृशकायास्ते चर्मास्थिस्नायुविग्रहाः ॥ ८०९ ॥

ह्रस्वकीर्णशिरोजाः स्युः पिशाचाश्चित्रकर्मणि ।
ईदृक्षा एव वेताला दीर्घदेहाः कृशोदराः ॥ ८१० ॥

१ D त्रां। २ A कं। ३ A टि। ४ A क्र। ५ D तुंदि।

कपिलैर्मूर्धजैर्युक्ता लेखनीया मनीषिभिः।

इति दैत्यदानवपिशाचवेतालमूर्तयः।

क्षेत्रपालो विधातव्यो दिग्वासा झंण्टिभूषितः॥ ८११॥

कृत्तिकां डमरूं बिभ्रद्दक्षिणे तु करद्वये।
वामे शूलं कपालं च मुण्डमालोपवीतिकाम्॥ ८१२॥

करोटीनिकरोदारमालाग्रथितशेखरः।

इति क्षेत्रपालमूर्तिः।

वक्ष्ये मनसिजं देवमिक्षुचापधरं तथा॥ ८१३॥

पञ्चपुष्पमयान्बाणान् बिभ्राणं दक्षिणे करे।
हरितं लोहितं वापि दिव्याभरणभूषितम्॥ ८१४॥

किञ्चित्कुटिलसंस्थानं पुष्पमालाभिचारितम्।
पीतं वस्त्रं वसानं च वसन्तेन समन्वितम्॥ ८१५॥

नानाकुसुमभूषेण कङ्केलीपत्रवाससा।
दाडिमीकर्णपूरेण कण्ठे बकुलमालिनी[६] (नम्)॥ ८१६॥

चम्पकैः स्वर्णसङ्काशैः कृतशेखरमालिना (नम्)।
पार्श्वे चाश्वमुखः कार्यो मकरध्वजधारकः॥ ८१७॥

प्रीतिर्दक्षिणभागेऽस्य भाजनोपस्करान्विता।
वामभागे रतिः कार्या रन्तुकामा निरन्तरम्॥ ८१८॥

शय्या तु सारसैर्युक्ता वापिका नन्दनं वनम्।

इति कामदेवमूर्तिः।

रक्तवर्णो महातेजा द्विबाहुः पद्मभृद्रविः॥ ८१९॥

सप्तभिस्तुरगैर्युक्ते सप्तरज्जुसमन्विते।
एकचक्रे रथे तिष्ठन्पादाक्रान्तसरोरुहः॥ ८२०॥

माणिक्यकुण्डलोदारः पद्मरागकिरीटकः।
रक्ताम्बरधरो रम्यः सुव्यक्ताङ्गो मनोहरः॥ ८२१॥

१ A रुष्टि B कु D कुल। २ D कम्। ३ D टिनी। ४ D लोद्गृ। ५ B D सदा। ६ D ना। ७ A पद्मं। ८ B लया। ९ A वामे। १० F म्प।

पादौ तस्य प्रकर्तव्यौ सुमहत्तेजसा वृतौ ।
अनूरुः सारथिः कार्यः प्रतीहारौ च पार्श्वयोः ॥ ८२२ ॥

दण्डपिङ्गलनामानौ खड्गखेटकधारिणौ ।
धाता च लेखनीहस्तो जगत्कर्मविलेखकः ॥ ८२३ ॥

कार्यो भा[१]नुसमीपस्थश्चित्रकर्मविशारदैः ।

इति सूर्यमूर्तिः ।

चन्द्रश्चित्रे विधातव्यः श्वेतः श्वेताम्बरावृतः ॥ ८२४ ॥

दशश्वेताश्वसंयुक्तमारूढः स्यन्दनं शुभम् ।
द्विभुजो दक्षिणे पाणौ गदां बिभ्रत्पृषोदरीम् ॥ ८२५ ॥

वामस्तु वरदो हस्तः शशाङ्कस्य निरूप्यते ।

इति चन्द्रमूर्तिः ।

धरापुत्रस्य वक्ष्यामि लक्षणं चित्रकर्मणि ॥ ८२६ ॥

चतुर्भुजो मेषगमश्चाङ्गारसदृशद्युतिः ।
द[२]क्षिणं त्वू[३]र्द्धगं हस्तं वरदं परिकल्पयेत् ॥ ८२७ ॥

ऊर्ध्वे(र्ध्वं) शक्तिसमायुक्तं वामौ शूलगदाधरौ ।

इति भौममूर्तिः ।

सिंहारूढं बुधं वक्ष्ये कर्णिकारसमप्रभम् ॥ ८२८ ॥

पीतमाल्याम्बरधरं स्वर्णभूषाविभूषितम् ।
वरदं खड्गसंयुक्तं खेटकेन समन्वितम् ॥ ८२९ ॥

गदया च समायुक्तं बिभ्राणं दोश्चतुष्टयम् ।

इति बुधमूर्तिः ।

पीतो देवगुरुर्लेख्यः शुभ्रश्च भृगुनन्दनः ॥ ८३० ॥

चतुर्भिर्बाहुभिर्युक्तश्चित्रकर्मविशारदैः ।
वरदौ साक्षसूत्रौ च कमण्डलुधरौ तथा ॥ ८३१ ॥

१ A भानुः । २ B दक्षिणाधोहस्तं ...। ३ A तूर्ध्वगं ।

दण्डिनौ च तथा बाहू बिभ्राणौ[1] परिकल्पयेत्।

इति गुरुशुक्रमूर्तिः(र्ती)।

सौरिं नीलसमाभासं गृध्रारूढं चतुर्भुजम् ॥ ८३२ ॥

वरदं बाणसंयुक्तं चापशूलधरं लिखेत्।

इति शनिमूर्तिः।

सिंहासनगतं राहुं करालवदनं लिखेत् ॥ ८३३ ॥

वरदं खड्गसंयुक्तं खेटशूलधरं क्रमात्।

इति राहुमूर्तिः।

धूम्रादिबाहवः सर्वे वरदाश्च गदाधराः ॥ ८३४ ॥

गृध्रपृष्ठसमारूढा लेखनीयास्तु केतवः।

इति केतुमूर्तिः।

ग्रहाः किरीटिनः कार्या नवतालप्रमाणतः ॥ ८३५ ॥

रत्नकुण्डलकेयूरहाराभरणभूषिताः।

चित्रकर्मोपयोगार्थं हयलक्ष्म प्रवक्ष्यते ॥ ८३६ ॥

आयामाच्च तथोत्सेधाद्विस्तारा[2]रात्परिणाहतः।
मुखं तालत्रयं प्रोक्तमायामेन प्रमाणितम् ॥ ८३७ ॥

तन्मध्यवर्तिनो वक्ष्ये प्रदेशान्मात्रया मितान्।
वर्तुलं मस्तकं कार्यं षडङ्गुलमितं बुधैः ॥ ८३८ ॥

अङ्गुलं कर्णमूलान्तदु(मु)त्सेधेन व्यवस्थितम्।
कर्णमूलात्तथा कर्णौ कार्यावष्टाङ्गुलाहि(य)तौ ॥ ८३९ ॥

नागवल्लीदलप्रख्यौ चतुरङ्गुलविस्तृतौ।
कर्णमूलस्य नेत्रस्य मध्यं कार्यं नवाङ्गुलम् ॥ ८४० ॥

नेत्रस्य भागे दैर्घ्यं स्यात्सार्धद्व्यङ्गुलविस्तृतम्[3]।
भ्रुवौ द्व्यङ्गुलै[4]र्विस्तारे दैर्घ्येण तु षडङ्गुले ॥ ८४१ ॥

भ्रुवोर्मध्यप्रदेशस्तु द्वादशाङ्गुलसम्मितः।
षडङ्गुलं भवेद्भालं केशान्ते मध्यदेशतः ॥ ८४२ ॥

---

१ F णो। २ D स्त। ३ A तौ। ४ F लि।

अष्टाङ्गुलं ततश्चाधो द्वादशाङ्गुलविस्तृतम् ।
एकस्तालो भवेद्दैर्घ्यं ललाटस्य प्रमाणतः ॥ ८४३ ॥

नयनाद्गण्डविस्तारः षोडशाङ्गुलसम्मितः[1] ।
नासावंशश्च(स्य) दैर्घ्यं स्याच्चतुरङ्गुलसम्मितम् ॥ ८४४ ॥

विस्तारस्त्र्यङ्गुलः प्रोक्तो नासिका चतुरङ्गुला ।
नासापुटस्य विस्तारो[2] द्व्यङ्गुलः परिकीर्तितः ॥ ८४५ ॥

पुटयोरन्तरं प्रोक्तं मूर्द्धभागे षडङ्गुलम् ।
एको भागस्त्वधोभागे तत्र रेखात्रयं भवेत् ॥ ८४६ ॥

तस्याधः प्रोथदेशः स्याच्चतुरङ्गुलमायतः ।
चतुरङ्गुलविस्तारः पीनत्वं चतुरङ्गुलम् ॥ ८४७ ॥

मुखं[3]राजे(ः) पुटस्यापि मध्यं स्याच्चतुरङ्गुलम् ।
मुखरेखाबहिर्भागे हनुः स्याच्चतुरङ्गुला ॥ ८४८ ॥

चिबुकं तत्र कर्तव्यं पञ्चाङ्गुलमितं बुधैः ।
प्रोथश्च (थाच्च) सृक्कपर्यन्तमास्यरेखा स्वराङ्गुला ॥ ८४९ ॥

मस्तकात्कीकशाखां[4] ( खं ) वा चतुस्तालमितं भवेत् ।
स्यात्केशदेशविस्तारः शीर्षदेशेऽङ्गुलत्रयम् ॥ ८५० ॥

एको भागो भवेन्मध्यं प्रान्ते ( न्तो ) मध्यमितो[5] भवेत् ।
कृतकेसरकः स्कन्धः कर्तव्यः कीकसावधि[6] ॥ ८५१ ॥

कीकसायां[7] तथा कार्याः केसरा[8] दैर्घ्यशालिनः ।
मस्तके च तथा केशां[9] द्वादशाङ्गुल[10]दैर्घ्यकाः[11] ॥ ८५२ ॥

तरङ्गिता घनाः स्निग्धाः श्लक्ष्णाः[12] कार्या मनोहराः ।
निगाला[13]द्वत्सपर्यन्तं ग्रीवानलकदीर्घता ॥ ८५३ ॥

तालद्वितयमाख्याता तद्विस्तारोऽङ्गुलत्रयम् ।
स्कन्धमूलपरीणाहः षट्तालाश्चाङ्गुलद्वयम् ॥ ८५४ ॥

---

१ D विस्तृतः । २ F रे । ३ A मुखं राजे । ४ A D F का B कीकशाखान्तं । ५ F मध्
६ D धिः । ७ A खांस्त F पां । ८ A सा । ९ A द्दैर्घ्यं । १० D शाः द्वा A शाङ्गा । ११ D
१२ A कृष्णाः । १३ B D लद्वय ।

स्कन्धमध्यपरीणाहश्चतुष्पञ्चाशदङ्गुलः।
ग्रीवासन्धिपरीणाहस्त्रितालश्च नवाङ्गुलः॥ ८५५॥

वक्ष्ये(क्षो)देशस्य विस्तारो द्वादशाङ्गुलसम्मितः।
अष्टादशाङ्गुलं दैर्घ्यं वक्षोदेशस्य कल्पितम्॥ ८५६॥

कक्षाकीकसयोर्मध्यं द्विचत्वारिंशदङ्गुलम्।
बाहुदैर्घ्यं भवेत्तत्र प्रोक्तं पञ्चदशाङ्गुलम्॥ ८५७॥

बाहुमूलपरीणाहस्त्रिंशदङ्गुलसं[1]म्मितम् (तः)।
बाहुमध्यपरीणाहो वितस्तिद्वयवेष्टनः॥ ८५८॥

बाहुप्रान्तपरीणाहो भवेदष्टादे[2]शाङ्गुलः।
जङ्घायाश्च परीणाहो द्वादशाङ्गुलसम्मितः॥ ८५९॥

पलिहस्तस्य दैर्घ्यं तु षडङ्गुलमुदीरितम्।
पलि[3]हस्तपरीणाहो भवेदष्टादशाङ्गुलः॥ ८६०॥

कुष्टिकाया भवेद्दैर्घ्यं षडङ्गुलमुदीरितम्।
कुष्टिकायाः परीणाहो द्वादशाङ्गुलसम्मितः॥ ८६१॥

खु[4]रदैर्घ्यं समुद्दिष्टं षडङ्गुलमितं बुधैः।
भवेत्खुरपरीणाहो विंशत्यङ्गुलसम्मितः॥ ८६२॥

पृष्ठप्रदेशे दैर्घ्यं च चतुस्तालमुदाहृतम्।
कक्षादेशपरीणाहः सप्ततालो दशाङ्गुलः॥ ८६३॥

मध्यभागपरीणाहः शताङ्गुलमितो भवेत्।
रन्ध्रस्थाने परीणाहः सप्ततालो दे[5]शाङ्गुलः॥ ८६४॥

रन्ध्रोपरन्ध्रयोर्मध्यं विंशत्यङ्गुलमायतम्।
त्रिकस्थानस्य विस्तारो द्विगुणै[6]ः षोडशाङ्गुलैः॥ ८६५॥

जघनस्य तु विस्तारः षट्चत्वारिंशदङ्गुलः।
पुच्छमूलं भवेद्भागो नाहेन द्वादशाङ्गुलम्॥ ८६६॥

१ A मन्तरम्। २ B ष्टाङ्गुलः स च। ३ B D ली। ४ A ख। ५ A श्व। ६ D णः।

वर्तिकादैर्घ्यमाख्यातं विंशत्यङ्गुलसम्मितम् ।
तत्र वालाः प्रकर्तव्याश्चमरीपुच्छसन्निभाः ॥ ८६७ ॥

दैर्घ्यं जननिं[1](न)रोहाद्वा द्वाविंशत्यङ्गुलं[2] भवेत् ? ।
वक्त्र( क्र )सक्थिगतं दैर्घ्यं षट्त्रिं[3]शदङ्गुलैर्मितम् ॥ ८६८ ॥

मूले तस्य परीणाहः स्याच्चत्वारिंशदङ्गुलैः[4] ।
सक्थिमध्यस्य नाहः स्यादेकोनत्रिंशदङ्गुलः ॥ ८६९ ॥

सक्थिप्रान्तपरीणाहस्तालद्वितयसन्निभः ।
नवाङ्गुलायता स्थूला(रा) नाहेन त्रिंशदङ्गुला ॥ ८७० ॥

उपरन्ध्रान्तमारभ्यं[5] कोशस्थानं तु तालतः ।
भागार्यं[6]तो भवेत्कोशो मुष्कावष्टाङ्गुलायतौ ॥ ८७१ ॥

स्थूरँ[7]योर्बु[8]र्घ्नभागस्थे जङ्घे च पलिहस्तकें[9] ।
कुष्टं[10]के च खुरद्वन्द्वं लेखौं[11](ख्यं)पौरस्त्यपादवत् ॥ ८७२ ॥

स्कन्धौ[12] मुखं च मध्यं च कृशं कार्यं प्रमाणतः ।
वडवाया महद्वक्षो जघनं च सु[13]विस्तृम् ॥ ८७३ ॥

एतल्लक्षणमुद्दिष्टं वाजिनां सोमभूभुजा ।

इति हयचित्रम् ।

गजस्य वक्ष्यते लक्ष्म सूत्रमानानुसारतः ॥ ८७४ ॥

गजस्य लक्षणं वक्ष्ये प्रमाणेन प्रमाणितम् ।
चित्रकर्मोपयोगार्थं वि[14]चित्रं चित्रवेदिनाम् ॥ ८७५ ॥

केशान्ततः समारभ्य यावत्स्यात्प्रतिमानकम् ।
मुखं तत्कथितं तज्ज्ञैर्गजानां चित्रवेदिभिः ॥ ८७६ ॥

ऊर्ध्वं केशान्ततः शीर्षं यावत्कुम्भसमुद्भवः ।
शीर्षस्योपरि कुम्भौ द्वौ कर्तव्यौ कुचसन्निभौ ॥ ८७७ ॥

---

१ A जनीरोह B जनैर्निरोहाद्वा F जनैरोह । २ A लो । ३ A त्रि । ४ A लम् । ५ A भ्याका
६ A याता । ७ D लाया बु । ८ F घ्रा । ९ F कै । १० A ष्टे केचित् । ११ D खं B F
१२ D F न्धो । १३ A स । १४ B D ज्ञानार्थं B विस्तृतम् ।

वायु[1]कुम्भस्य शीर्षस्य सन्धेराप्रतिमानतः[2] ।
पिप्पलीदन्तवेष्टा[3]भ्यां वेष्टितं मुखमीरितम् ॥ ८७८ ॥
त्रिधा विभज्य त्रि[4]तालं त्रीन्भागान् परिकल्पयेत् ।
त्रिधा विभज्य तद्वक्त्रं त्रितालं परिकल्पयेत् ॥ ८७९ ॥
ऋजूनि लम्बप(सू)त्राणि विधेयानि त्रयोदश ।
एकवालविभिन्नानि चित्रकर्मविशारदैः ॥ ८८० ॥
तत्तत्प्रमाणकान्येव तिर्यक्सूत्राणि कारयेत् ।
एकादशैव तानि स्युः करिणां चित्रकर्मणि ॥ ८८१ ॥
विंशं श[5]तं समुद्दिष्टाः कोष्ठास्तत्सूत्रमध्यगाः ।
तत्र सूत्रेषु वक्ष्यामि प्रदेशान्नागसम्भवान् ॥ ८८२ ॥
लम्बसूत्रं बहिष्ठं[6] यत्तच्छिष्टं प्रतिमान[7]के ।
निदाने वायुकुम्भाग्रे दन्तमूले द्वितीयकम् ॥ ८८३ ॥
बिन्दुमध्ये[8] मदच्छिद्रं(द्रे) सृक्कदेशे तृतीयकम् ।
कण्ठे च पिप्पलीदेशे कुम्भप्रान्ते तुरीयकम् ॥ ८८४ ॥
आसने[9] कर्णमध्ये च पुरोनखरपाश्चिमे ।
अंशे[10]नं कर्णपूरेण (च) नखरं (रे) पश्चिमे तथा ॥ ८८५ ॥
[11]द्वितीये नखरे लग्नं कार्यं सू[12]त्रं तु पञ्चमम् ।
अं[13]शे(से)कर्णदलस्याग्रे पश्चा[14]न्नग(ख)रपश्चिमे[15] ॥ ८८६ ॥
सूत्रं षष्ठं प्रकुर्वीत सूत्रन्यासविशारदः ।
मध्यदेशे प्रयुञ्जीत लम्बसूत्रचतुष्टयम् ॥ ८८७ ॥
सूत्राणां दशकं त्वेवं कथितं सूत्रवेदिभिः ।
पेच[16]के चा[17]पराङ्घ्रि(ङ्घ्रे)श्च[18] प[19](पा)श्चात्यनखमध्यगः(गम्) ॥ ८८८ ॥
एकादशं भवेत्सूत्रं द्वादशं जघने स्मृतम् ।
त्रयोदशं बहिष्ठं तु पुच्छमूले सुघट्टितम् ॥ ८८९ ॥
लम्बसूत्रक्रमो ह्येष कुञ्जरस्य निरूपितः ।
तिर्यक्सूत्राणि वक्ष्यामि सङ्गतानि प्रदेशतः ॥ ८९० ॥

१ A युं B F युं । २ F त । ३ F वं । ४ B D स्ता । ५ F विंशतं B D शच्छ । ६ D हिः पृष्ठं तत् । ७ A म । ८ D ध्य । ९ D adds this line । १० B आसने । ११ D तृतीय । १२ D सूत्रे । १३ D शैः । १४ D श्चिमं ख । १५ A मो । १६ A पञ्च । १७ D वा । १८ A ङ्घ्रस्य । १९ A पाद्या-त्यनकगा D पश्चात्पा ।

मस्तके वंशपृष्ठे च सूत्रमूर्ध्वं प्रकल्पयेत् ।
वायुकुम्भस्य शीर्षस्य सन्धौ पिप्पलिदेशतः ॥ ८९१ ॥

पेचके च विधातव्यं सूत्रमेतद्द्वितीयकम् ।
वायुकुम्भस्य मध्ये च नेत्रकर्णदलाग्रतः ॥ ८९२ ॥

पेचकस्याप्यधोभागे सूत्रं कार्यं तृतीयकम् ।
मुखमध्ये सृक्कदेशे पुच्छमस्तकसङ्गतम् ॥ ८९३ ॥

चतुर्थं कल्पयेत्सूत्रं चित्रकल्पेन[1] कोविदः ।
प्रतिमानात्प्रवेष्टाच्च कण्ठाच्च गुदसङ्गतम् ॥ ८९४ ॥

पञ्चमं रचयेत्सूत्रं तिर्यक्सूत्र[2]विशारदः ।
दन्ताग्रात्वत्सदेशाच्च कक्षाभागात्समागतम्[3] ॥ ८९५ ॥

षष्ठं सूत्रं विधातव्यं चित्रलेखनकोविदैः[4] ।
पञ्चतालं भवेद्गात्रं जठरं पञ्चतालकम् ॥ ८९६ ॥

चतुस्तालं तथा प्रोक्तमपरं चित्रवेदिभिः ।
मुख्यं च (खस्य) त्रिगुणं दैर्घ्यं कर्णात्पुच्छावधि स्थितम् ॥ ८९७ ॥

जठरेण समं गात्रं तालहीनं ततोऽपरम् ।
एतल्लक्षणमुद्दिष्टं सूत्रमानानुसारतः ॥ ८९८ ॥

अनेनैव प्रमाणेन लेखनीया गजाकृतिः ।

इति गजचित्रम् ।

असङ्ख्यातानि सत्त्वानि शक्यन्ते नैव भाषितुम् ॥ ८९९ ॥

तत्तद्रूपानुसारेण लेखनीयानि कोविदैः[6] ।
सादृश्यं लिख्यते यत्तु दर्पणे प्रतिबिम्बवत् ॥ ९०० ॥

तच्चित्रं विद्धमित्याहुर्विश्वकर्मादयो बुधाः ।
आकस्मिकं लिखामीति यदनुद्दिश्य लिख्यते ॥ ९०१ ॥

१ D कल्पन B कर्मणि । २ A त्रं । ३ A तः । ४ A दः । ५ A गम् । ६ D चित्रके । ७ ... अमुकं वि ।

आकारमात्र[1]सम्पन्ने तदविद्धमितिस्मृतम् ।
शृङ्गारादिरसो यत्र दर्शनादेव गम्यते ॥ ९०२ ॥

भावचित्रं तदाख्यातं चित्तकौतुककारकम् ।
सदुच्चैर्वर्णकैर्लेख्यं धूलिचित्रं विदुर्बुधाः ॥ ९०३ ॥

सुप्रमाणं तथा विद्धमविद्धं भावचित्रकम् ।
रसधूलिगतं प्रोक्तं मानसोल्लासपुस्तके ॥ ९०४ ॥

निर्मितं चित्रलक्ष्मेदं चि[2]त्ततोदनहारकम् ।
भूलोकमल्लदेवेन चित्र[3]विद्या[4]विरञ्चिना ॥ ९०५ ॥

इति सर्वचित्रप्रकरणम् ।

चित्रं लक्षणसंयुक्तं लेखयित्वा महीपतिः ।
प्रासादे रुचिरे तुङ्गे सौवर्णकलशान्विते ॥ ९०६ ॥

नानावर्णविचित्राङ्ग[5]रचनापरिशोधि[6]ना ।
चित्रवस्तु[7]समाकीर्णवितानेनोपर[8]ञ्जिते ॥ ९०७ ॥

विशाले स्तम्भविन्यस्तपट्टिकाधारधारिते ।
वरदारुसमाकीर्णे[9] वेणुका[10]म्रविनिर्मिते ॥ ९०८ ॥

गुञ्जापुञ्ज[11]सुसंच्छन्ने मृत्तिकाश्लक्ष्णभित्तिके ।
धा(ध)राकुट्टिमशोभाढ्ये गोमयालेपपाविते[12] ॥ ९०९ ॥

पञ्चवर्णवितानाढ्ये मध्यपद्मविभूषिते ।
[13]तिष्ठेद्दिवाससंयुक्तो भुवनाश्रयसद्म[14]नि ॥ ९१० ॥

ईशानकोणभागे तु सर्वलक्षणसंयुतम् ।
दक्षिणे मुखशा[15]लाङ्के देवता[16]रूपाचित्रितम् ॥ ९११ ॥

स्नानगेहं तु तत्पार्श्वे कर्तव्यं वेदिकायुतम् ।
होमशाला तदभ्याशे वन्हिकुण्डविमण्डिता ॥ ९१२ ॥

धू[17]मनिर्गमनोपायकृतजालपरिष्करा ।
कृत्वैवं देवतागारं तत्र सम्पूजयेद्धरिम् ॥ ९१३ ॥

---

१ A कं सत्त्वे । २ A वित । ३ F त्रं । ४ B विद्यां विरच्यता । ५ A ङ्गं । ६ A शोभिता B शोभिना । F शोधता । ७ F स्त्र । ८ D शोभि । ९ A र्णे । १० A कम्रा । ११ A संच्छि D विच्छि । १२ D चिते । १३ B तिष्ठते सः समायुक्तो । १४ F प । १५ D शोभा । १६ A तैरु । १७ F मस्य ।

हरिद्रादलसञ्छन्ने वालमूलकभित्तिके ।
मरुकैर्दमनैर्बद्धे सिकतामयभूतले ॥ ९१४ ॥

सेचितो ( ते ) गन्धतोयैश्च मण्डपे सुमनोरमे ।
कान्ताभिर्वीज्यमानस्तु ग्रीष्मे मध्यं दिनं नयेत् ॥ ९१५ ॥

प्रासादस्योर्ध्व[3]भूभागप्राङ्गणे सुमनोहरे ।
सुधाकरसुधाश्च्यो[4]( श्चो )तसेचिते शशिवारिणा ॥ ९१६ ॥

पुष्पप्रकरशोभाढ्ये मृदुगन्धवहे सुखे ।
सुखसंलापयोग्याभिः प्रेयसीभिः समन्वितः ॥ ९१७ ॥

गीतज्ञैर्वाद्यनिपुणैस्तद्गुणज्ञानकोविदैः ।
विदग्धैर्वाक्यचतुरैः परिहासविनोदिभिः ॥ ९१८ ॥

साहित्यरसभावज्ञैः कथाकथनकोविदैः ।
प्रसादपात्रैश्चयुतो निशार्धं गमयेन्नृपः ॥ ९१९ ॥

ततो विसृज्य तान्सर्वान्सुखशालामथावसेत् ।
प्रियया सह सम्प्रीत्या निशाशेषं नयेत्सुखी ॥ ९२० ॥

वसन्ते च तथा ग्रीष्मे एवंविधगृहोषितः ।
शीतलान्सुखसंस्पर्शान्भोगान् सेवेत भूपतिः ॥ ९२१ ॥

नीरन्ध्रके निवाते च शीतसीकरवर्जिते ।
हर्म्ये चतुष्किकायां वा वर्षासु निवसेन्नृपः ॥ ९२२ ॥

गवाक्षैः शोभिते हर्म्ये रम्ये सर्वप्रकाशके ।
निवातभूगृहे भव्ये हर्म्ये वा शीतवर्जिते ॥ ९२३ ॥

तिरस्करिण्या पिहिते कर्पटेन निगूहिते ।
वराङ्गीपीवरोद्वृत्तस्तनस्तवकमध्यगः ॥ ९२४ ॥

हेमन्ते शिशिरे राजा निवसेच्छीतवर्जितः ।
एवं दिव्येषु गेहेषु निवसेद्यत्र भूपतिः ॥ ९२५ ॥

---

१ A द्ध । २ B F सेवि D सर्व । ३ A स्यार्ध । ४ B द्योत D श्चे । ५ D सिं । ६ A क
७ D विशेत् । ८ A सी । ९ D निविशेन्नृ । १० B र्पे D र्परेण ।

ऋतुकालविभागेषु गृहभोगः प्रकीर्त्तितः।
एवं गृहो[1]पभोगोऽयं कथितः सोमभूभुजा ॥ ९२६ ॥

इति गृहोपभोगः ॥ १ ॥

अथ स्नानोपभोगोऽयं कथ्यते सुमनोहरः।
स्वगृहाभ्यन्तरेशानकोणे स्नानगृहं न्यसेत् ॥ ९२७ ॥

काञ्चनस्तम्भरुचिरं स्फुटत्स्फटिकवेदिकम्।
काचकुट्टिमशोभाढ्यं दरदाक्लृ[2]प्तभित्तिकम् ॥ ९२८ ॥

चीनपट्ट[3]वितानेन चित्रेण परिशोभितम्।
वरुणस्य वितानेन स्पर्धमानं स्वतेजसा ॥ ९२९ ॥

तत्र स्थित्वा महीपालः स्नानभोगमथाचरेत्।
केतकीबहलामोदैर्जातीपरिमलोत्करैः ॥ ९३० ॥

पुन्नागचम्पकोद्दामगन्धसंवासितैस्तिलैः।
यन्त्रसम्पीडितैस्तैलं गृहीत्वाऽभ्यङ्गमाचरेत् ॥ ९३१ ॥

केतकीगर्भ[4]पत्राभनखैरस्तरुणीजनैः।
सुकुमारकरस्पर्शहर्षोत्कर्ष[5]कैर्वृतः ॥ ९३२ ॥

औषधीगन्धसंसिद्धैः स्तुत्यैर्दोषापहैः शुभैः।
तैलैरभ्यज्य[6] गात्राणि मल्लैः संवाह[7]वेदिभिः ॥ ९३३ ॥

मृदुहस्ततलैः स्वैरं मर्दनं च समाचरेत्।
कोष्ठं पटोलकं[8] मुस्तां[9] ग्रन्थिपर्णं निशाद्वं[10]यम् ॥ ९३४ ॥

पालकं तगरं मांसं ( सी ) वाजिगन्धा च पुष्करम्।
एषां मूलानि संगृह्य छायाशुष्काणि कारयेत् ॥ ९३५ ॥

निम्बस्य राजवृक्षस्य तुलस्याश्चार्जकस्य च।
पत्राण्येषां समाहृत्य प्रागुक्तैः सह ले[11]पयेत् ॥ ९३६ ॥

एलाजातीसर्षपाश्च तिलाः कुस्तुम्बुराण्यपि।
बाकुची चक्रमर्दश्च बीजान्येषां स[12]माहरेत् ॥ ९३७ ॥

१ D ल्पि। २ F क्लृ। ३ A ट्टि। ४ A पत्रगर्भा। ५ B च। ६ B D स्य F ध्व। ७ B द। ८ B का। ९ B क्ता। १० B ह्व। ११ D ख। १२ B प्रकारये।

लवङ्गं पद्मकं लोध्रं श्रीखण्डं सुरदारु च ।
अगरुं सरलं चैव काष्ठान्येतानि निक्षिपेत् ॥ ९३८ ॥

नागकेसरपुन्नागकान्ता(न्त)कुङ्कुमचम्[1]पकम् ।
पुष्पाण्येतानि संगृह्य तेषां मध्ये विनिक्षिपेत् ॥ ९३९ ॥

गुग्गुलुं[2] सैन्धवं चैव बोलं[3] सर्जरसं[4]तथा ।
द्रव्याण्येतानि सम्पेष्य पयसा काञ्जिकेन वा ॥ ९४० ॥

अभ्यक्तगात्रो[5] नृपतिरुद्वर्तनमथाचरेत् ।
अधुना स्नेहनिर्वृत्त्या(त्यै) सुगन्धा कथ्यते खली ॥ ९४१ ॥

आरनालसुसंसिद्धगोधूम[6]श्लक्ष्णचूर्णकैः[7] ।
मदनस्य च मूलेन चूर्णितेन विमिश्रिता ॥ ९४२ ॥

स्नेहापनयने योज्या पिशुनेनोत्तमा खली[8] ।
नानातीर्थाहृतैस्तोयैर्विमलैर्मलहारिभिः ॥ ९४३ ॥

सुगन्धवासनायुक्तैः सुखोष्णैः[9] स्पर्शसौख्यदैः ।
एभिरापूरितैः पात्रैः लोहकूर्परगादिभिः ॥ ९४४ ॥

कलशैः काञ्चनोत्पन्नैः कान्तैः कान्ताकरोत्थितैः[10] ।
शातकुम्भमयैः कुम्भैः राजद्भिरपि राजितैः[11] ॥ ९४५ ॥

करिकुम्भयुगप्रख्यपयोधरविडम्बिभिः ।
चन्द्रकान्तिमुखाभासाः परिपूर्णपयोधराः ॥ ९४६ ॥

स्वलावण्यतरङ्गिण्यः प्रत्यक्षा जलदेवताः ।
मेघकान्ता इव श्यामाः कान्ताः कनकविद्युतः ॥ ९४७ ॥

अभिषेकाम्बुधारोत्थस्फुरत्स्तानितविभ्रमाः ।
इतस्ततः पर्यटन्त्यः समाः सौम्या वरस्त्रियः ॥ ९४८ ॥

स्नपनं नृपतेः कुर्युस्तन्मुखाहितै[12]दृष्टयः ।
सुगन्धामलकैः श्लक्ष्णैरनुलिप्य शिरोरुहान् ॥ ९४९ ॥

---

१ B पद्म । २ F लं । ३ A लः । ४ A सस्त A कज्जलसः । ५ F मा । ६ A मूत्र । ७ F व
८ BD पेष्या । ९ F खू । १० D F ज्झि । ११ A जि । १२ BD सक्त ।

ता[1]न्यप्यपनयेयुस्ताः सुखोष्णैः सलिलैः पुनः ।
वङ्गचोलकलिङ्गान्ध्रमलयक्षेत्रजात[2]या ॥ ९५० ॥

धूपवासितयात्यर्थं कृता[3]लेपं हरिद्रया ।
ईषच्छीतेन तोयेन रागिण्यो[4] रागहेतवः ॥ ९५१ ॥

स्नपयेयुर्महीपालं स्नानभोग इतीरितः ।
निर्वर्त्यै[5]वं नृपः स्नानं परीधायाङ्गमार्जनम् ॥ ९५२ ॥

सितं सुधौतं वसनं धृतमार्द्रं परित्यजेत् ।
भूलोकमल्लदेवेन स्नानभोग उदाहृतः ॥ ९५३ ॥

इति स्नानविधिः ( भोगः ) ॥ २ ॥

इदानीं पादुकाभोगः कथ्यते ललि[6]तक्रमः ।
श्रीपर्णीदारुघटिते हरिचन्दननिर्मिते ॥ ९५४ ॥

गिरिमल्लीसमुद्भूते स्य[7]न्दनद्रुमकल्पिते ।
मयूरपिच्छगुञ्जादि(भिः) समन्तात्परिशोभिते ॥ ९५५ ॥

चर्मणा निर्मिते वापि नानावर्णसुरञ्जिते ।
गजदन्तसमुद्भूते सुवर्णरचनान्विते ॥ ९५६ ॥

विचित्रे सुदृढे श्लक्ष्णे शिञ्जाने सुमनोहरे ।
लघुच्छत्रकृता[8]धारे सुस्पर्शे[9] पादुके समे ॥ ९५७ ॥

अध्यास्ते यन्महीपालः पादुकाभोग इष्यते ।
ईरितः पादुकाभोगः सोमेश्वरमहीभुजा ॥ ९५८ ॥

इति पादुकाभोगः ॥ ३ ॥

इदानीमुत्तमो भोगस्ताम्बूलस्य निगद्यते ।
स्नानगेहा[10]द[11]थागम्य प्रविश्य[12] सुखमन्दिरम् ॥ ९५९ ॥

ताम्बूलभोगमन्विच्छंस्ताम्बूलस्याधिकारिणम् ।
समाहूय महीपालस्ताम्बूलास्वादनं चरेत् ॥ ९६० ॥

---

१ D तम । २ F य । ३ A त । ४ A ण्यौ । ५ A F निर्वृत्यैवं । ६ A लिखि । ७ F स्पंदंन ।
८ F था A पा । ९ F र्शपा । १० A भोगा । ११ A दुपा । १२ D शेत ।

नैलवर्तिपुरोद्भूतांस्तथेश्वरपुरोद्भवान् ।[1]
काण्डिकापुरजान्वापि क्रमुकौघान् सुपाकिनः ॥ ९६१ ॥[2][3]

भङ्गे पाटलसङ्काशान् कषायमधुरान्वरान् ।[4][5][6]
फालान् कृत्वोष्णतोयेन प्रक्षाल्याशोष्य घर्षितान् ॥ ९६२ ॥[7]

कस्तूरिकल्कसंयुक्तान् छायाशुष्कान् मनोहरान् ।[8]
तरुणानि सवल्कानि कथितानि प्रयत्नतः ॥ ९६३ ॥

वनवासप्रभूतानि क्रमुकस्य फलानि च ।
कृत्वा त्वचा वियुक्तानि छायायां शोषितानि च ॥ ९६४ ॥[9][10]

चतुर्भागनियुक्तानि ताम्बूलार्थं समाहरेत् ।
वनवासे राष्ट्रराजे सम्भूतानि वराणि च ॥ ९६५ ॥

कर्पूरवल्लीजातानि नागवल्ल्युद्भवानि च ।[11][12]
उषितानि समं वल्या वत्सरं वरकेषु च ॥ ९६६ ॥[13]

दानि(नादे)योदकसिद्धानि पाण्डुराणि गुरूण्यपि ।[14][15]
पर्णानि प्रान्तकृत्तानि द्विपञ्चाशन्मितानि च ॥ ९६७ ॥

बहिस्थकृष्णपर्णानि विडैके विदि(हि)तानि च ।
शैलोदकसमुद्भूतशिलापाकसमुद्भवम् ॥ ९६८ ॥[16]

मुक्ताशुक्तिभवं चूर्णं वीटकेषु निधापितम् ।[17]
अपक्वमुज्ज्वलं स्वच्छं कर्पूरस्फटिकोपमम् ॥ ९६९ ॥

मलयाचलशृङ्गोत्थलतानिर्याससम्भवम् ।
तलिनं शकलाकारं चन्द्रकान्तसमप्रभम् ॥ ९७० ॥[18]

सहकारसमानेन सौरभेण समन्वितम् ।
ईशावासाभिधानं च कर्पूरं सहजं वरम् ॥ ९७१ ॥

समानीय महीपालस्ताम्बूलार्थं प्रकल्पयेत् ।
कस्तूरी चूर्णकं श्लक्ष्णं घनसारस्य चूर्णकम् ॥ ९७२ ॥

---

१ F मे D न B D एलाचूर्ण। २ D पू। ३ D त्या। ४ A ङ्के। ५ D लि। ६ D व। ७ D फाली F ह्वालिं। ८ D F रमान्। ९ F नि। १० D छायया। ११ D ल्लि। १२ A वे। १३ B D F चकेषु। १४ D F ना। १५ B D F क्ता। १६ D वा। १७ D वि। १८ B D ल्लि।

मिश्रयित्वा समं कृत्वा ताम्बूलार्थं नियोजयेत् ।
कस्तूरीशशिकङ्कोल्लजातीफलसुचूर्णकम् ॥ ९७३ ॥

श्लक्ष्णं करम्बकं[1] हृद्यं नानापरिमलोत्कटम् ।
खदिरक्वाथचूर्णं तु कस्तूरीक्षोदमिश्रितम् ॥ ९७४ ॥

श्रीखण्डकल्कसंयुक्तं[2] कर्पूररजसान्वितम् ।
मेलयित्वा समैर्भागैर्गुटिका[3] कल्पिता शुभा ॥ ९७५ ॥

त्रिदोषशमनी कण्ठ्या दन्तानां च बलावहा ।
अन्यत्खदिरसारस्य चूर्णं कोष्ठाम्लसंयुतम् ॥ ९७६ ॥

जातीफलस्य चूर्णेन मिश्रितं मुखरञ्जनम् ।
जम्बीरबीजपूरस्य कलिकाभिः समन्वितम् ॥ ९७७ ॥

कर्पूरपूर्वं खादेच्च तदनु क्रमुकान्वितम् ।
इत्थं विविधयोगेन ताम्बूलं पृथिवीक्षिता ॥ ९७८ ॥

यत्स्वाद्यते स ताम्बूलभोगश्चतुरवर्णितः ।
ताम्बूलभोगः कथितः श्रीसोमेश्वरभूभुजा ॥ ९७९ ॥

इति ताम्बूलभोगः ॥ ४ ॥

विलेपनोपभोगोऽयं कथ्यते भोगिनां प्रियः ।
अच्छं विलेपनं रम्यमङ्गसौख्यप्रदायकम् ॥ ९८० ॥

ततः समाचरेद्धूपैः कान्ताकरमनोहरम् ।
चन्दनागरुकर्पूरकस्तूरीकुङ्कुमान्वितम् ॥ ९८१ ॥

सुरभीकेसरोन्मिश्रग्रन्थिपर्णसमायुतम् ।
जातीपूतिफलोपेतं सुश्लक्ष्णं भूरि धूपितम् ॥ ९८२ ॥

वसन्ते लेपनं कुर्याद्यक्षकर्दममुत्तमम् ।
कक्षाभागे कर्णसन्धौ नाभौ [6]वंक्षणयोरपि ॥ ९८३ ॥

स्वेदगन्धविनाशार्थं सान्ध्याख्यं लेपमाचरेत् ।
चन्दनस्य तरोर्मूलं ग्रन्थिकोटक(र)कर्प्परम् ॥ ९८४ ॥

१ A रव । २ F ण्डं । ३ A लि । ४ F षः । ५ F त । ६ A व । ७ A न्वि । ८ B साध्या । ९ B D F ख ।

गन्धोत्कटं हिमस्पर्शं वरिष्ठं [1]तन्निरूपितम् ।
यच्छेदा[2]द्रक्ततां धत्ते घर्षे [3]पीतत्वमेव च ॥ ९८५ ॥

शोषे शुभ्रत्वमायाति स्वादे तिक्तरसं भवेत् ।
पुन्नागकेसरैर्युक्तं श्रीखण्डं शशिना युतम् ॥ ९८६ ॥

केतकीमल्लिकोन्मिश्रपाटलीगन्धवासितम् ।
शशाङ्क[4]करसङ्काशं हिमडि[5]ण्डीरपाण्डुरम् ॥ ॥ ९८७ ॥

निदाघे शीतलं लेपं नृपः कुर्यात्समुज्ज्वलम् ।
श्रीखण्डं तादृशं भव्यं निघृष्टं पेषितं पुनः ॥ ९८८ ॥

मसृणं लेपयेद्गात्रं स्वच्छमच्छं विलेपनम् ।
काश्मीरदेशसम्भूतं हरिचन्दनकेसरम् ॥ ९८९ ॥

लोहितं तत्समादाय पेषण्या श्लक्ष्णपेषितम् ।
कटुतैलसमायुक्तं लाक्षारागसमप्रभम् ॥ ९९० ॥

तादृशं कुङ्कुमं श्रेष्ठं लेपनार्थं महीभृताम् ।
कुङ्कुमं लघुसम्मिश्रं घनसारसुधूपितम् ॥ ९९१ ॥

कुर्वीत लेपनं रम्यं वर्षाकाले नरेश्वरः ।
मदतारुण्यसम्पन्नमृगनाभिसमुद्भवा ॥ ९९२ ॥

गोलकाकारसंस्थाना किञ्चित्कुङ्कुमपिञ्जरा ।
मृदिता चिक्कणीभूता द्विगुणेव विलोक्यते ॥ ९९३ ॥

दग्धा याति न भस्मत्वं लसत्सिमिसिमास्वना ।
स्वादे तिक्ता कटुर्वाऽपि तुलने लघुतां गता ॥ ९९४ ॥

तादृग्विधा वरिष्ठा या कस्तूरी सा नृपोचिता ।
एवंवि[6]धां समा[7]नीय कस्तूरीं[8] दिव्यसौर[9]भाम् ॥ ९९५ ॥

पेषण्या पेषयित्वा तां तोयमिश्रां विलेपयेत् ।
गन्धि(न्ध)मार्जारबीजानि समाहृत्य विनिक्षिपेत् ॥ ९९६ ॥

---

१ A तन्निरूप्यते । २ D च्छिद्रा । ३ B D पा । ४ A रस । ५ A म । ६ A धा ७ A नाप्य
८ A री । ९ A भा ।

उष्णतैले समुद्धृत्य कटुतैलेन लेपयेत् ।
विकीर्य च निशाचूर्णं छायायां च विशोषयेत् ॥ ९९७ ॥

एवं संचिनुयाद्भूरि क्राथयेत्संचितान्यपि ।
श्रीवृक्षाम्रकजम्बूनां तुलसीबीजपूरयोः ॥ ९९८ ॥

पल्लवैः क्रथितैस्तोयैर्बीजानि क्षालयेत् पुनः ।
प्रक्षाल्य शोषयेत्तज्ज्ञस्ततः कुर्याच्च खण्डशः ॥ ९९९ ॥

निक्षिप्य वारिमध्ये च बीजपूरफलत्वचः ।
क्रथयेन्मोचयेत्पश्चात्ततः स्नेहोऽपि निःसरेत् ॥ १००० ॥

तोयोपरिस्थितं स्नेहं शुक्त्या काञ्चनजातया ।
आहरेच्च प्रयत्नेन यद्वा बीजानि तापयेत् ॥ १ ॥

पेषण्यां पीडयित्वा च स्नेहं निःसारयेद्बुधः ।
निःसारितं ततः स्नेहं सितया धूपयेत्पुनः ॥ २ ॥

पश्चाच्च लघुकर्पूरैर्वारं वारं च धूपयेत् ।
पुंलिङ्गं नाम तं प्राहुर्दिव्यगन्धं मनोहरम् ॥ ३ ॥

नृपाणां लेपने शस्तं हेमन्तशिशिरादिषु ।
चन्दनं बहुसौरभ्यं मिलितं पद्मकेसरैः ॥ ४ ॥

उत्पलाभासितं लेपे शरत्काले प्रशस्यते ।
नवकेसरसम्भूतं कुङ्कुमं कायरञ्जनम् ॥ ५ ॥

सुगन्धितैलसंयुक्तं शीतकालेऽनुलेपनम् ।
वस्त्रभूषानुसारेण शृङ्गाराङ्गविलेपनम् ॥ ६ ॥

ललाटे बाहुशिखरे कण्ठे वक्षस्यथोदरे ।
नानागन्धसमोपेतं नानावर्णसमन्वितम् ॥ ७ ॥

विलेपनोपभोगाय क्रियते यद्विलेपनम् ।
विलेपनोपभोगोऽयं वर्णितः सोमभूभुजा ॥ ८ ॥

इति विलेपनभोगः ॥ ९ ॥

१ F द्भू । २ D क्का । ३ A ततः । ४ A क्का । ५ D पिष्ट । ६ D श्रि ।

वस्त्राङ्ग उ(णामु)पभोगोऽयमधुना परिकीर्त्यते ।
अश्विनी वस्त्रदा प्रोक्ता रोहिणी धनवर्धिनी ॥ ९ ॥

पुनर्वसौ(स्वोः) वसुप्राप्तिः पुष्ये सौख्यं प्रवर्तते ।
उत्तरायां यशोलाभो हस्ते सिद्धिस्तु कर्मणाम् ॥ १०१० ॥

चित्रायां शुभसम्प्राप्तिः स्वात्यां सौभाग्यसम्पदः ।
विशाखायां जनप्रीतिर्मैत्रे मित्रसमागमः ॥ ११ ॥

तुष्टिः स्यादुत्तराषाढे धनिष्ठा धान्यपूरणी ।
उत्तरायां शुभप्राप्ती रेवती रत्नवृद्धिकृत् ॥ १२ ॥

एवमृक्षगणः[3] प्रोक्तो नवीनाम्बरधारणे ।
बुधे धनागमं विद्यात्[4]प्रजावृद्धिर्भवेद्गुरौ ॥ १३ ॥

आयुः प्रवर्धते शुक्रे नूतने वस्त्रधारणे ।
गृहोत्सवे विवाहे च परभूपालसङ्गमे ॥ १४ ॥

उत्सवेषु च सर्वेषु गीतनृत्यविनोदने ।
दानकर्मणि यज्ञे च तथा युद्धमहोत्सवे ॥ १५ ॥

जये नवाम्बरं धार्यं न दुष्यति कदाचन ।
कृतानुलेपो राजेन्द्रो वस्त्रभाण्डाधिकारिणम् ॥ १६ ॥

आनेतुमादिशेद्वस्त्राण्युत्तमानि बहूनि च ।
पोट्टालपुरजातानि चीरपल्लीभवानि च ॥ १७ ॥

नागपत्तनजातानि चोलदेशोद्भवानि च ।
अल्लिकाकुलजातानि सिंहलद्वीपजानि च ॥ १८ ॥

अणिलावाडजातानि मूलस्थानोद्भवानि च ।
तोण्डीदेशसमुत्थानि पञ्चपट्टणजानि च ॥ १९ ॥

भिन्नजाता(ती)नि दिव्यानि महाचीनभवानि च ।
कलिङ्गदेशजातानि वङ्गदेशभवानि च ॥ १०२०[8] ॥

१ D वर्ण्यं । २ A भा । ३ A वं ऋ । ४ D विं । ५ F ज्ञा । ६ A णः । ७ F दा । ८ D F क

९ F वेगा A वेङ्गा ।

वसनानि विचित्राणि पट्टसूत्रमयानि च ।
कार्पासक्षौमसूत्राणि रोमभिर्निर्मितानि च ॥ २१ ॥

श्वेतानि रक्तवर्णानि पीतानि हरितानि च ।
नीलानि च तथा प्रान्ते पल्लवेषु सितानि च ॥ २२ ॥

एतद्व्यत्ययभिन्नानि सितलेखामयानि च ।
नानावर्णसुरेखाणि पञ्चवर्णा[1]श्चलानि च ॥ २३ ॥

चक्ररेखासुरम्याणि रेखात्रययुतानि च ।
उत्तरीया च[2](रावर)रेखाणि मध्य(ध्ये)सूक्ष्मसुरेख[3]या ॥ २४ ॥

अङ्गुल्यायतरेखाणि सूक्ष्मरेखाणि मध्यतः ।
अङ्गुलीद्वयरेखाणि वृत्तरेखाणि कुत्रचित् ॥ २५ ॥

चतुष्कोणसुरेखानि क्वचिद्बिन्दुयुतानि च ।
सुश्लक्ष्णानि सुरम्याणि घनानि विरलानि च ॥ २६ ॥

लघूनि बहुमूल्यानि गुरूणि च दृढानि च ।
प्रक्षालेऽधिकरङ्गानि रञ्जितानि च यन्त्रकैः ॥ २७ ॥

तन्तुबन्धसुरक्तानि नानावर्णकृतानि च ।
मञ्जिष्ठारागरक्तानि लाक्षाद्रवयुतानि च ॥ २८ ॥

कौसुम्भ[4]रसलिप्तानि सिन्दूरारुणितानि च ।
हरिद्रारागमिश्राणि नीलीरागोत्कटानि च ॥ २९ ॥

अभयारसकृष्णानि निशानीलीमयानि च ।
शुकपिच्छसवर्णानि केकिकण्ठच्छवीनि च ॥ १०३० ॥

पिच्छाकपिच्छवर्णानि हंसकुन्दनिभानि च ।
चीरघट्टकास(पट्टक–शे)लाकप्रच्छदा(दो)पाङ्गिकानि च ॥ ३१ ॥

पट्टिका च पटीपट्टं पट्टां[5]श्च विविधाः शुभाः ।
अङ्गिका च तथोष्णीषकै[6]पि(कोशि)का विविधाकृतिः ॥ ३२ ॥

प्रावारा विविधाकारा दर्शिता वस्त्रधारिभिः ।
विचित्रवर्णवस्त्राणि पट्टसूत्रमयानि च ॥ ३३ ॥

१ D च । २ F वरेषाणि । ३ F रक्ष । ४ D कोसम्भ F कोसुम्भ A कौसुम्ब । ५ A य । ६ D के ।

वसन्ते बिभृयाद्राजा क्षौमकार्पासकानि च ।
सुश्लक्ष्णानि मनोज्ञानि सूक्ष्माणि विरलानि च ॥ ३४ ॥

निदाघे धारयेद्राजा सितानि विविधानि च ।
रोमजानि सुसूक्ष्माणि श्लक्ष्णानि विविधानि च ॥ ३५ ॥

माञ्जिष्ठानि च[1] रक्तानि प्रावृट्काले विधारयेत् ।
पाटलान्यभिरामाणि धूम्राणि मधुराणि च ॥ ३६ ॥

शरत्कालेऽतिसूक्ष्माणि वसनानि विधारयेत् ।
कौसु[2]म्भानि सुभव्यानि लाक्षिकानि घनानि च ॥ ३७ ॥

अङ्किकाश्च पटीजाता[3]ः शीतकाले भव( जे ) न्नृपः ।
ऋतूनामनुसारेण शृङ्गाररस्यानुसारतः ॥ ३८ ॥

शीतवाते प्रयाणे च [4]पापर्द्धौ वारिखेलने ।
सूक्ष्माणि बहुमूल्यानि [5]वर्णाढ्यानि वराणि च ॥ ३९ ॥

नानाद्वीपसमुत्थानि शृङ्गारे धारयेन्नृपः ।
एवं यद्बिभृयाद्वस्त्रं वस्त्रभोगः प्रकीर्तितः ॥ १०४० ॥

वस्त्रभोगोऽयमाख्यातः सोमेश्वरमहीभुजा ।

इति वस्त्रोपभोगः ॥ ६ ॥

अधुना कथ्यते सम्यङ् माल्यभोगो मनोहरः ॥ ४१ ॥

वस्त्रप्रसाधनं कृत्वा ततो माल्यं विधारयेत् ।
चम्पकं मल्लिकायुक्तं चम्पकान्युत्पलैः सह ॥ ४२ ॥

चम्पकं सुरभीयुक्तं चम्पकं पाटलान्वितम् ।
मल्लिका पाटलायुक्ता मल्लिका सुरभीयुता ॥ ४३ ॥

मल्लिका बकुलैर्मिश्रा मल्लिकोत्पलसंयुता ।
मालती मल्लिकोपेता मालती पाटलान्विता ॥ ४४ ॥

मालती बकुलोपेता मालती सुरभीयुता ।
करवीरेण संयुक्तं शतपत्रं मनोहरम् ॥ ४५ ॥

१ D विचित्राणि । २ D स । ३ D F ता । ४ A चाऽप ? । ५ A वा ।

शतपत्रं स[1]मरुकं शतपत्रं सपाटलम् ।
मालती मल्लिका यूथी वर्णपुष्पेण संयुता ॥ ४६ ॥

ईरुवैती तथा यूथा(थी) नेवाली च तथा मता ।
बिभर्ति माल्यं शिरसा नृपतिः स्वानुसारतः ॥ ४७ ॥

स्वे[2]पके(स्वकेशे)षु च कु[3]ल्यां(कण्ठे)च माल्यभोगः प्र[4]कीर्तितः ।

इति माल्योपभोगः ॥ ७ ॥

एवं विधार्य माल्यानि भूषणान्यथ भूपतिः ॥ ४८ ॥

रत्नहेममयान्यङ्गैर्विभृयात्[5]संप्रभाणि च ।
यन्त्रसंघट्टि[6]तानीव सुवृत्तान्युज्ज्वलानि च ॥ ४९ ॥

नवनीरसुकान्तानि मौक्तिकानि वराणि च ।
शुक्तिगर्भसुमुक्तानि कुम्भिकुम्भोद्भवानि च ॥ १०५० ॥

वंशरन्ध्रप्रभूतानि मेघधाराँभवानि च ।
सिंहलद्वीपजातानि रत्नाकरभवानि च ॥ ५१ ॥

दाडिमीवीजकान्तानि शक्रगोपनिभानि च ।
रक्तपद्मसरागर्भाणि बालसूर्यप्रभाणि च ॥ ५२ ॥

माणिक्यान्यतिर[7]म्याणि स्थूलानि विविधानि च ।
अतसीपुष्पसङ्काशं हरिकान्त(न्ति)समप्रभम् ॥ ५३ ॥

हरकण्ठसमच्छायमिन्द्रनीलं प्रभायुतम् ।
रोहिणाद्रिसमुद्भूत(तं)तृं[10]णग्राहि मनोहरम् ॥ ५४ ॥

मसृणं चाति[11]शोभाढ्यमिन्द्रनीलं सुपीवरम् ।
इन्द्रायुधान्तग(र्ग)र्भेण हरितेन समप्रभम् ॥ ५५ ॥

कीरपक्षसं[12]दृक्षाभं गरुडोद्गा[13]रसम्भवम् ।
श्लक्ष्णं मरकतं कान्तं नलिका(ना)भं दलोपमम् ॥ ५६ ॥

विषघ्नं दुर्लभं रत्नं बहुमूल्यं मनोहरम् ।
सितं ब्राह्मणजातीयं रक्तं क्षत्रियजातिकम् ॥ ५७ ॥

---

१ D कुरब । २ CDF ह । ३ C खो D खोम्प । ४ F स । ५ F त्सु । ६ F टि । ७ D र । ८ D गात्राणि । ९ D रागाणि । १० A तृ । ११ A लि । १२ A सवृक्षाभं समक्षाभं । १३ F द्रा ।

वैश्यजातीयकं पीतं कृष्णं वृषलजातिकम् ।
षट्कोणसिद्धं दीप्तं च फलकेषु समं लघु ॥ ५८ ॥

वैराकरभवं वज्रं विप्रजातीयमुत्तमम् ।
एतानि रत्नमुख्यानि कथितानीह लक्ष्मतः ॥ ५९ ॥

गोमूत्रवर्णं निर्णीतं रक्तं गोमेदकं भवेत् ।
ईषत् कृष्णं सिताभं च वैडूर्यकमुदाहृतम् ॥ १०६० ॥

ईषत्पीतं च वज्राभं पुष्परागं प्रचक्षते ।
पक्वबिम्बफलाभासं शुकचञ्चुसमप्रभम् ॥ ६१ ॥

काकतुन्डीसमच्छायं प्रवालमभिधायते ।
तपनस्यै करस्पर्शादुद्गिरत्यनलं हि यः ॥ ६२ ॥

सूर्यकान्तं विजानीयात्स्फटिकं रत्नमुत्तमम् ।
अमृतांशुकरस्पर्शाद्यः स्रवत्यमृतोदकम् ॥ ६३ ॥

दुर्लभं तन्महारत्नं चन्द्रकान्तं विदुर्बुधाः ।
श्वेताभ्रकसमं वर्णे हिमाद्रिशिखरोद्भवम् ॥ ६४ ॥

निर्मलं च प्रभायुक्तं स्फटिकं परिकीर्तितम् ।
सर्वेषामेव रत्नानां लक्षणं समुदाहृतम् ॥ ६५ ॥

निजवर्णसमुत्कर्षात्कान्तिमत्त्वान्महार्घता ।
स्थूलमुक्ताफलैः कार्या कण्ठे त्वेकावली वरा ॥ ६६ ॥

मध्यमुक्ताफलैः कुर्यात्त्रिसरं सुविचक्षणः ।
तथा पञ्चसरं कुर्यान्नवसप्तसरं तथा ॥ ६७ ॥

उपान्ते नीलमाणिक्यमिश्रितं सुमनोहरम् ।
काञ्चनीभिर्मृणालीभिः पङ्क्तिस्थाभिः सुशोभितान् ॥ ६८ ॥

क्रमशो हीयमानाश्च सरान्कुर्यान्मनोहरान् ।
गुच्छीकृतमृणाला(ली)भिर्हारे सर्वान्सरान समान् ॥ ६९ ॥

१ D क्ष्यते । २ D स्यातप । ३ F रमान् । ४ D ण्ठी । ५ F सिहरि ।

नीलमाणिक्यसंयुक्तान्पूर्वं त(वे[1]व)त्परिकल्पयेत् ।
नीलैर्मु(र्यु)क्तास्तथामुक्ता मध्ये सिद्धं[2]न्तिकायुताः ॥ १०७० ॥

नीललं[3]म्बणिकाः ख्याता हरिन्माणिक्यजास्तथा ।
नीलमाणिक्यसंयुक्ता मुक्ताः पूर्वक्रमेण च ॥ ७१ ॥

कृतो वर्णसरो नाम दर्शनीयो मनोहरः ।
ए[3]त एव सरो(रा)हीना मृणालीभिः सुसंहताः ॥ ७२ ॥

आनाभिलम्बिता भूषा ब्रह्मसूत्रमितीरिता ।
सुवर्णोपरिविन्यस्तरत्नरा[4]जिसमन्वितम् ॥ ७३ ॥

हरिन्माणिक्यनीलेन बृहता नायकेन च ।
मध्यदेशनि[5]विष्टेन मणिना परिशोभितम् ॥ ७४ ॥

पदकं रुचिरं रम्यं वक्षःस्थलविभूषणम् ।
नानारत्नविचित्रं च मध्यनायकसंयुतम् ॥ ७५ ॥

सरलै(कै)र्लम्बितं रम्यं पदकं बन्धुरं विदुः ।
सिं[6]हरत्न(वक्त्र)समाका[7]रं नानारत्नविचित्रितम् ॥ ७६ ॥

सूसकैर्लम्बनैर्युक्तं केयूरं बाहुभूषणम् ।
सुवर्णमणिविन्यस्तमुक्ताजालकमङ्गदम् ॥ ७७ ॥

पेंचकापिच्छसंयुक्तं बाहुसन्धिविभूषणम् ।
सुवर्णोपरिविन्यस्तनानारत्नविराजितम् ॥ ७८ ॥

हस्तस्य कटकं रम्यं स्वप्रभापरिशोभितम् ।
वज्रद्वितयमध्यस्थं हरिन्माणिक्यनीलकम् ॥ ७९ ॥

द्विहीरकमितिख्यातमङ्गुलीयकमुत्तमम् ।
अरं[8]कोणनिविष्टै[9]श्च[10] पविभिः परिशोभितम् ॥ १०८० ॥

मध्ये रत्नसमायुक्तमां[11]त्रे (मन्त)वज्रमितीरितम् ।
वृत्ताकारैर्निविष्टैश्च कुलिशैरपि वेष्टितम् ॥ ८१ ॥

१ C D F ध्वंतु । २ C F त । ३ D अत एव सरा । ४ A जाति । ५ D F विनि । ६ A सीह ।
७ D भासं । ८ D पं । ९ D रे । १० D ष्टश्च । ११ D मत्रे ।

मध्ये च मणिना युक्तं रविमण्डलमीरितम् ।
ऋज्वायतचतुष्कोणक्रमोन्नतनिवेशिभिः ॥ ८२ ॥

वज्रैर्मध्यगमाणिक्यैर्नन्द्यावर्ताङ्गुलीयकम् ।
माणिक्येन सुरङ्गेण मौक्तिकेन सुशोभिना ॥ ८३ ॥

प्रवालेनाभिरम्येण तथा मरकतेन च ।
पुष्परागेण वज्रेण नीलेन परिशोभिना ॥ ८४ ॥

गोमेदकेन रत्नेन वैडूर्येण विनिर्मितम् ।
रत्नैर्नवग्रहच्छायैर्नवभिः परिकल्पितम् ॥ ८५ ॥

नवग्रहमितिख्यातमङ्गुलीयकमुत्तमम् ।
अङ्गुलीवेष्टकं वज्रैर्वेष्टि[1]तं वज्रवे[2]ष्टकम् ॥ ८६ ॥

अन्यै रत्नैश्च यच्चेवं तद्वेष्टकमुच्यते ।
हीरयोरुभयोर्मध्ये कीलितं हीरमुत्तमम् ॥ ८७ ॥

त्रिहीरकमिति ख्यातमङ्गुलीयकमुत्तमम् ।
यत्तु नागफणाकारं बा(ब)हुरत्नविभूषितम् ॥ ८८ ॥

अङ्गु[3]लीवलये(यं) वज्रैर्वेष्टिते(तं) शक्तिमुद्रिका ।
अन्यै[4]श्च विविधै रत्नैः सन्निवेशविशेषतः ॥ ८९ ॥

नानारूपा[5]भिधानैश्च कल्पिता मुद्रिकाँ(ः)शुभा[6]ः ।
केवलै[7]मौक्तिकैरेव तुँ[8](व)लये तुँ निशेविता(वेशितैः) ॥ १०९० ॥

मुक्ताताडकसंज्ञं तत्कर्ण[9]भूषणमुत्तमम् ।
वलयद्वयविन्यस्तमुक्ताफलविराजितम् ॥ ९१ ॥

मध्ये नीलेन संयुक्तं द्विराजित(क)मुदाहृतम् ।
एवं त्रिराजिकं प्रोक्तं पू[11]र्णमध्यं च मौक्तिकैः ॥ ९२ ॥

तत्पूर्णमध्यमाख्यातं मुक्ताफलविभूषणम् ।
मौक्तिकानि बहिः पंक्तौ तदत (त्न) र्णलकं ततः ॥ ९३ ॥

---

१ F वज्रतं । २ D ष्टि । ३ F लैव । ४ F पवि । ५ D ताः । ६ A भा । ७ A ळ
८ A D यु । ९ D र्णे ।

वज्राणि च ततोऽप्यन्तर्वज्रगर्भमितीरितम्[1] ।
एवं बहिस्थमुक्तं यन्मध्यवज्रैश्च पूरितम् ॥ ९४ ॥

मध्ये माणिक्यसंयुक्तं भुवि मण्डनमुच्यते ।
नीलैर्मरकतैश्चैव माणिक्यैश्च करम्बितम् ॥ ९५ ॥

यद्रूपं(पै)रचितैर्म(तंम)ध्ये तत्तत्संज्ञकमुच्यते ।
सोपानक्रमविन्यस्तवज्रपङ्क्तिविराजितम् ॥ ९६ ॥

षडष्टनेमिभिः कान्तं कुण्डलं तत्प्रचक्षते ।
शोधितेन सुवर्णेन सुचिरेणातिकान्तिना ॥ ९७ ॥

शृङ्खला विविधाः कार्या स्ताटङ्क[2]कटकानि च ।
स्त्रीपुंसयोः समानानि भूषणान्यत्र विस्तरात् ॥ ९८ ॥

कथितान्यथ वक्ष्यामि स्त्रीणां पुंसां पृथक् पृथक् ।
अश्वत्थपत्रसङ्काशं सुवर्णेन विमिश्रितम् ॥ ९९ ॥

माणिक्यवज्रखचितमायतैर्मौक्तिकैर्युतम् ।
तत्र मुक्ताफलैः पार्श्वे सूसकाभ्यां विराजितम् ॥ ११०० ॥

ताभ्यां बहिर्मरालाभं नानारत्नैः प्रकल्पयेत् ।
तदूर्ध्वं वज्रमाणिक्यमौक्तिकैः कृतबन्धनम् ॥ १ ॥

तादिदं हंसतिलकं योषित्सीमन्तभूषणम् ।
[3]कनत्काञ्चनपट्टेन पिनद्धं वलयाकृतिः(ति) ॥ २ ॥

मुक्ताजालं[4] तदूर्ध्वं च कृतं[5] तद् दण्डकं भवेत् ।
क्रमशो वर्धमानं तच्चूडा[6]मण्डनमुत्तमम् ॥ ३ ॥

केतकीदलसङ्काशं कनत्काञ्चनकल्पितम् ।
दण्डकस्योर्ध्वभागस्य भूषणं तदुदाहृतम् ॥ ४ ॥

सौवर्णकल्पितं पद्मं नानारत्नविराजितम् ।
चूडिकापरभागस्य भूषणं परिकीर्तितम् ॥ ५ ॥

१ A भितमी । २ A ड । ३ D क्कण । ४ A लस्त । ५ mss कृतं तं D कृतदण्डकसंभवेत् । ६ A डी ।

सौवर्णकुसुमैः[1] क्लृप्तं मुक्तासरसमन्वितम्।
बृहन्माणिक्यनीलैश्च[2] लम्बनं चूडिभूषणम्॥ ६॥

पिचुमन्दफलाकारैर्मौक्तिकैर्नीलकैः[3] कृतम्।
माणिक्यैर्गारुडैर्हीरैर्मुकुलं कर्णभूषणम्॥ ७॥

तस्या बहिश्च संलग्ना लम्बनी नीलनिर्मिता।
नवभिर्दशभिर्वापि स्थूलमुक्ताफलैः कृता॥ ८॥

कण्ठप्रमाणरचिता सरिका गलभूषणम्।
ततो बहिश्च संलग्ना वज्रसङ्कलिका शुभा॥ ९॥

सिंहवक्त्रसमाकारौ स्वर्णरत्नविनिर्मितौ।
मुक्तासूसंकसंयुक्तौ[4] नीलमाणिक्यलम्बनौ॥ १११०॥

कञ्चुके कीलितौ कार्यौ भुजभूषणकौ वरौ।
नामतो बाहुवलयौ पुंसि यावङ्गदाभिधौ॥ ११॥

काञ्चनीभिः शलाकाभिः सुसूक्ष्माभिर्विनिर्मितौ।
मणिबन्धमितादूर्ध्वं वलयैर्वर्धितैः क्रमात्॥ १२॥

प्रादेशमात्रकं[11] दैर्घ्यं विस्तारे[12] बाहुवेष्टनम्[13]।
द्विधा विभज्य कर्तव्यं ग्रथितं[14] कीलकेन तु॥ १३॥

अनेनैव प्रकारेण वज्रमाणिक्यमौक्तिकैः।
चूडकं मण्डनं स्त्रीणां प्रकोष्ठस्य विभूषणम्॥ १४॥

अनेनैव प्रकारेण तदर्धेन विनिर्मितम्।
अर्धचूडमिति[15] ख्यातं स्त्रीणां प्रियतमं सदा॥ १५॥

चतुरङ्गुलविस्तारं जघनाभोगवेष्टितम्।
सौवर्णरत्नरचितं सूत्रै[16](स)कैर्लम्बनैर्युतम्॥ १६॥

हेमघर्घरघण्टाभिर्निर्मितं रवसंयुतम्।
काञ्चीदामेति विख्यातं कटिभूषणमुत्तमम्॥ १७॥

---

१ D F णैः। २ F ना। ३ C F लि। ४ A क्तासु। ५ A शक। ६ D मणिक। ७ F ज। ८ D म्बि। ९ A ना। १० A पूर्वं। ११ A त्रि। १२ A द्वि। १३ A च। १४ D न्थि। १५ A दं। १६ A त।

हस्तचूडकवज्रस्य जङ्घाकाण्डप्रमाणकौ।
नानारत्नैश्च खचितौ विख्यातौ पादचूडकौ ॥ १८ ॥

सुवर्णरचितौ कार्यौ त्रिभागे कृतखण्डनौ।
सन्धिदेशे[1] सुसंश्लिष्टौ[2] कीलकेन च कीलितौ ॥ १९ ॥

चतुरस्रौ षडस्रौ वा तथाष्टास्रौ च कारयेत्।
सौवर्णैर्बुद्बुदै रम्यैः पङ्क्तिस्थैर्वा विराजितौ ॥ ११२० ॥

श्लक्ष्णौ वा कान्तिसंयुक्तौ नादवन्तावथापि वा।
रत्नैर्वा विविधैर्युक्तौ कटकौ पादभूषणौ ॥ २१ ॥

त्रिपञ्चशृङ्खलाक्लृप्तौ नानारत्नशतैः कृतौ।
कीलकाहिवं[3](त)संधी तौ पादपादा(ला)वितीरितौ ॥ २२ ॥

किङ्किण्यः स्वर्णरचिता गुणगुम्फितविग्रहाः।
नादवत्यः[4] सुरम्यास्ताः पादघर्घरिकाभिधाः ॥ २३ ॥

ईदृग्रूपसमाकारा नानारत्नैर्विनिर्मिताः।
ध्वनिहीनाः सुशोभाढ्याः राढकाः परिकीर्तिताः ॥ २४ ॥

आयताश्च सुवक्राश्च[5] कटकाकारनिर्मिताः।
अन्दुका इति विख्याता योषितां पादभूषणम् ॥ २५ ॥

पादतर्जनिमानेन कनत्काञ्चननिर्मिता।
स्थूलाश्च ध्वनिसंयुक्ता यमला मुद्रिका वरा ॥ २६ ॥

शिखरैः शोभितं यत्तु शेखरं तद्विदुर्बुधाः।
मुकुलाभं भवेद्यस्तु मुकुलं तत्प्रकीर्तितम् ॥ २७ ॥

केवलं सरकै[6]र्यत्तच्छि[7]रोवेष्टनमुच्यते।
एवं विरचितं रत्नै राज्ञां मस्तकभूषणम् ॥ २८ ॥

दलकं हेमरचितं व्याघ्रपुच्छं(च्छ) विनिर्मितम्।
मुक्तामाणिक्यखचितं पुरुषाणां विभूषणम् ॥ २९ ॥

शुचिना भूषणं धार्यं दिव्यरत्नविनिर्मितम्।
रत्नाधिदेवतास्तुष्टा यच्छन्ति महतीं श्रियम् ॥ ११३० ॥

१ A शस्तु। २ F क्त। ३ F वहि A वहि। ४ D F न्त्यः। ५ A च। ६ A सै। ७ F च्छ।

यथारुचि यथाशोभं प्रेयस्याश्चित्तसम्मतम् ।
धत्ते यद्भूषणं राजा भूषाभोगः प्रकीर्तितः ॥ ३१ ॥

भूषाभोगोऽयमाख्यातः सोमेश्वरमहीभुजा ।

इति भूषोपभोगः ॥ ८ ॥

सम्प्रत्यासनभोगश्च कथ्यते राजवल्लभः ॥ ३२ ॥

चम्पकाम्रमधूकानां पनसौदुम्बरस्य च ।
पीठानि सुविशालानि चतुष्पदयुतानि च ॥ ३३ ॥

आयतं चतुरस्रं च काञ्चनेनोपशोभितम् ।
श्लक्ष्णं मनोहरं पीठं मङ्गलासनमुत्तमम् ॥ ३४ ॥

श्रीपर्णीरचितं[1] रम्यं हस्तमात्रायु(य)तं शुभम् ।
अरत्निविस्तृतं पीठं पवित्रा[2]सनमुच्यते ॥ ३५ ॥

शाकदारुमयं भव्यं दृढं श्लक्ष्णं सुविस्तृतम् ।
चतुःपादयुतं पीठं मज्जनासनमीरितम् ॥ ३६ ॥

इष्टि[3]कानिर्मितं पीठं पृष्ठा[4]धारेण संयुतम् ।
सुधाकुट्टिमशोभाढ्यं मज्जं[5]ने पीठमीरितम् ॥ ३७ ॥

कार्[6]पासपूरितं वृत्तं छागीपट्टा[7]वगुण्ठितम् ।
हंसापिच्छभृतं वापि गदि(द्दि)काख्यं सुखासनम् ॥ ३८ ॥

छागचर्ममयं रक्तमूर्[8]णागर्भं सुविस्तृतम् ।
नानावर्णविचित्रं तदासनं पट्टगद्दिका ॥ ३९ ॥

तस्योपरि च विन्यस्तं हंसपिच्छैः सुपूरितम् ।
सितपट्टपि[9]नद्धं च श्वेतप्रच्छदसंयुतम् ॥ ११४० ॥

सङ्गीतकप्रसङ्गे च गजवाजिविनोदने ।
सर्वदा सुखसंवासे भूशय्यासनमुत्तमम् ॥ ४१ ॥

पञ्चभिः सप्तभिर्वापि नवभिर्लोहजैः पदैः ।
लोहपट्टकृताधारैर्लोहजालकमूर्धनि ॥ ४२ ॥

---

१ A फ। २ D विचि। ३ F ष्टि। ४ D ष्ठ। ५ F ज्जं। ६ F पादा। ७ D पूर्ण। ८ F सपूर्णि
९ F द।

छटि(दि)कापट्टगर्भस्थं कार्पासेन विमिश्रितम् ।
लोहासनमिदं प्रोक्तमुपरिष्टात्सुकीलितम्[१] ॥ ४३ ॥

शाकदारुविनिर्माणं दन्तिदन्तसुचित्रितम् ।
नानावर्णशताकारं मृत्त्वैकफल(पृष्ठैकफल)संयुतम् ॥ ४४ ॥

चतुष्पादकृताधारं सार्धहस्तं सुविस्तृतम् ।
[२]ईषत्समुन्नतं राज्ञां पृष्ठाधारासनं स्मृतम् ॥ ४५ ॥

रुचिरेण सुवर्णेन निर्मितं तत्र रञ्जितम् ।
अष्टाभिः स्फाटिकैः सिंहैर्मूर्धभिः सुविधारितम् ॥ ४६ ॥

अधः काञ्चनविन्यस्तरत्नवेदित्रयान्वितम् ।
आस्थानमण्डनं राज्ञां सिंहासनमिदं परम् ॥ ४७ ॥

पूतासनं देवकार्ये सु[३]र्खायां(य)[४]मङ्गलासनम् ।
स्वैरमन्यानि पीठानि सैंहमास्थानमण्डपे ॥ ४८ ॥

एतानि पीठान्यध्यास्ते राजा विभवभूषितः ।
यदासनोपभोगोऽयमभिज्ञैः परिभाषितैः ॥ ४९ ॥

[६]सम(सम्प्र)त्यासनभोगश्च कथितं(तः) लक्षणान्वितम्(तः) ।
एवमासनभोगश्च कथितः सोमभूभुजा ॥ ११५० ॥

इत्यासनोपभोगः ॥ ९ ॥

चारुचामरभोगोऽयं कथ्यतेऽमरवल्लभः ।
आस्थानमण्डपे रम्ये [८]विशाले सुखशीतले ॥ ५१ ॥

विन्यस्तरत्नशोभाढ्ये हेमस्तम्भविभूषिते ।
चित्रभित्तिमनोरम्ये नानावर्णवितानके ॥ ५२ ॥

सुधाकुट्टिमके दिव्ये सिंहपीठे भवेन्नृपः ।
शरच्छशाङ्कसङ्काशैर्यशःपुञ्जनिभैः सितैः ॥ ५३ ॥

मण्डितैर्हेमदण्डैश्च रत्नकान्तिविचित्रितैः ।
मयूरपिच्छसम्भूतैश्चमरीपुच्छसम्भवैः ॥ ५४ ॥

१ A लकम् । २ F Omits this line । ३ A D शेषा । ४ D या । ५ A तद् । ६ F Omits this line । ७ D नानावर्णवितानके । ८ D F वसे ।

चामरैर्हस्तविन्यस्तैर्वीजयन्ति वराङ्गनाः ।
सहस्राक्षमुखाभासैर्बर्हिबर्हविनिर्मितैः ॥ ५५ ॥

कूर्चकैर्वीजयन्तीह श्यामलाः कुन्तलाङ्गनाः ।
वालकव्यजनै रम्यैः सौरभ्येण मनोहरैः ॥ ५६ ॥

वीजयन्ति महीपालं कामिन्यः कामदेवताः ।
चन्द्रमण्डलसङ्काशैर्नानापट्टविनिर्मितैः ॥ ५७ ॥

वीजयन्ति धरानाथं वीजनैर्मृगलोचनाः ।
तालपत्रसमुद्भूतै रत्नकालंकृतैः शुभैः ॥ ५८ ॥

वीजनैश्चतुरस्रैश्च वीजयन्ति सुमध्यमाः ।
शोभार्थं विभवार्थं च स्वेदापनयनाय च ॥ ५९ ॥

चामरैर्वीजनं यत्तु स भोगश्चामराभिधः ।
एवं चामरभोगोऽयं भाषितः सोमभुभुजा ॥ ११६० ॥

इति चामरभोगः ॥ १० ॥

अधुनाऽऽस्थानभोगोऽयं कथ्यते जनवल्लभः ।
चामरैर्व्यजनैरेवं वीज्यमानो महीपतिः ॥ ६१ ॥

आस्थानमण्डपन्यस्तवरसिंहासनस्थितः ।
समाहूय प्रतीहारं सर्वाह्वानं समादिशेत् ॥ ६२ ॥

ततो दौवारिकाहूता विशन्ति नृपमन्दिरम् ।
पट्टीपिनद्धदोलान्तःस्थिताः शुद्धान्तयोषितः ॥ ६३ ॥

विचित्रछत्रसञ्छन्नछायाश्चामरवीजिताः ।
सौविदल्लकरैश्छन्दवेत्रदण्डनिवारणैः ॥ ६४ ॥

अपसर्पापसर्पेति गच्छ गच्छेति तर्जनैः ।
सुदूरोत्सारिताशेषमार्गस्थजनवर्जिताः ॥ ६५ ॥

प्रविशेयुर्नृपस्थानं सर्वाभरणभूषिताः ।
नानारत्नमयैर्दिव्यैश्चूडामण्डनदण्डकैः ॥ ६६ ॥

१ A यच्छ्या। २ F भेण। ३ D ट्टि। ४ D F अभ्र। ५ A चित्र। ६ A रो। ७ F ड्री।

सीमन्तस्यान्तरे हंसतिलकेन विराजिताः।
मुक्तामरकताकीर्णैर्नीलमाणिक्यलम्बनैः ॥ ६७ ॥

कर्णावतंसमुकुलैः कुण्डलैर्मणिमण्डितैः।
अलकाभरणैः पुष्पैः कनत्काञ्चननिर्मितैः ॥ ६८ ॥

कण्ठभूषणकैर्दिव्यैर्मुक्तामाणिक्यसम्भवैः।
पदकैरत्नशोभाढ्यैर्दिव्यरत्नयुतैः सरैः ॥ ६९ ॥

हारैर्मुक्तामयैः शुभ्रैः स्तनस्थलविभूषणैः।
विचित्ररत्नरचितैरङ्गदैर्बाहुभूषणैः ॥ ११७० ॥

साचिभूषणकैर्दिव्यैश्चूडाकैरत्नराजितैः।
कटकै रत्नरचितैर्नानारत्नाङ्गुलीयकैः ॥ ७१ ॥

रत्नकाञ्चीकलापैश्च जङ्घाभूषणचूडकैः।
नूपुरैः पादकटकैर्दिव्यरत्नविभूषितैः ॥ ७२ ॥

पादैः(दैः)पदकराजीभिः किङ्किणीजालकैरपि।
अङ्घ्रिशाखाविभूषाभिः क्वणन्तीभिः पदे पदे ॥ ७३ ॥

मुद्रिकाभिर्विचित्राभिर्भूषिता नृपयोषितः।
दिव्यवस्त्रपरीधानाः पदकञ्चुकशोभिताः ॥ ७४ ॥

क्षौमकार्पासकैर्युक्ता गन्धमाल्यविभूषिताः।
श्रीखण्डक्षोदशुभ्राङ्ग्यः कुङ्कुमद्रवरञ्जिताः ॥ ७५ ॥

सान्द्रकस्तूरिकापत्रवल्लीभिः समलङ्कृताः।
तिलकैर्विविधैर्भव्यैर्नानावर्णैर्मनोहरैः ॥ ७६ ॥

मनोरमारमण्यस्तास्तरुण्यः सुखभूमयः।
यथायोग्यं यथास्थानं यथाप्रेमं यथासनम् ॥ ७७ ॥

समन्तान्नृपमावेक्ष्य निविष्टाः पर्युपासते।
काश्चित्तुरङ्गमारूढाः काश्चिदश्वतरीस्थिताः ॥ ७८ ॥

१ F स। २ A हन्त। ३ A र्णे, र्णै? । ४ A णैर्मुह्यै। ५ A च्ची F वि। ६ A र। ७ C F दे। ८ D कागल। ९ D युक्तैः। १० A मं।

काश्चिच्चरणसञ्चाराश्चालयन्त्यो मनो नृणाम् ।
काश्चित्कनकभूषाढ्याः काश्चिद्रत्नविभूषिताः ॥ ७९ ॥

काश्चिन्मुक्तामयैर्हारैर्मण्डितस्तनमण्डलाः ।
काश्चिच्छङ्खमयैःश्लक्ष्णैर्नानारूपविनिर्मितैः ॥ ११८० ॥

मणिभिर्भूषिताः काश्चिन्नयनानन्दचन्द्रिकाः ।
काश्चित्सुरक्तवस्त्रैश्च रञ्जयन्त्यो मनो नृणाम् ॥ ८१ ॥

हरितैर्वसनैः काश्चिद्धरन्त्यो हृदयं नृणाम् ।
नीलाम्बरधरैः काश्चिन्निगिरन्त्यो दृशो नृणाम् ॥ ८२ ॥

मल्लिकामालिकाः काश्चित्काश्चिच्चम्पकमालिकाः ।
मालतीमालिकाः काश्चित्काश्चिदुत्पलमालिकाः ॥ ८३ ॥

काश्चिदुत्पलमालाभिर्भूषिताश्चोत्पलेक्षणाः ।
काश्चित्सुरभिमालाभिर्भ्राजिता भ्रमराकुलाः ॥ ८४ ॥

काश्चित्कुण्ड(न्त)लकामिन्यः कुटिलीकृतकुण्ड(त)लाः ।
काश्चिद्द्रविडकामिन्यः प्रकाशितपयोधराः ॥ ८५ ॥

काश्चिल्ललाटलटभाः सिन्दूरारुणमस्तकाः ।
महाराष्ट्रस्त्रियः काश्चिल्लम्बकोपक(ल)भूषिताः ॥ ८६ ॥

आन्ध्रनार्यो वराः काश्चिदपसव्योत्तरीयकाः ।
गुर्जर्यो वनिताः काश्चिदापाणिकृतकञ्चुकाः ॥ ८७ ॥

अम्भोजलेपनाः काश्चित्काश्चिच्चन्द्रसमाननाः ।
काश्चित्प्रहासवदनाः काश्चिद्रम्यमुखश्रियः ॥ ८८ ॥

सुनीलमूर्धजाः काश्चित्काश्चिच्चन्द्रार्धभालिकाः ।
सुशोभश्रवणाः काश्चित्काश्चित्स्वच्छकपोलकाः ॥ ८९ ॥

भ्रूभङ्गविभ्रमाः काश्चित्काश्चिद्दीर्घविलोचनाः ।
रम्यनासापुटाः काश्चित्काश्चिद्दाडिमदन्तिकाः ॥ ११९० ॥

१ D चाराश्च । २ F च सं । ३ D दूर्णक । ४ A कुण्डली D कटिसूत्रविराजिताः । ५ D नय । ६ A मस्रा । ७ F ट्टीः ।

पक्वबिम्बाधराः काश्चित्काश्चित्कम्बुशिरोधराः ।
वृत्तबाहुलताः काश्चित्काश्चित्कोमलपाणयः ॥ ९१ ॥

केतकीनखराः काश्चित्काश्चित्पीनपयोधराः ।
कृशोदर्यस्तथा काश्चित्काश्चित्स्थूलनितम्बकाः ॥ ९२ ॥

रम्भोरुयुगला काश्चित्काश्चिज्जङ्घामनोहराः ।
मृदुपादतलाः काश्चित्काश्चिच्चञ्चन्नखत्विषः ॥ ९३ ॥

खड्गश्यामाङ्गनाः काश्चित्काश्चित्स्वर्णसमप्रभाः ।
वंशश्यामाः स्त्रियः काश्चित्काश्चिच्चम्पकसत्विषः ॥ ९४ ॥

यूनां हृदयहारिण्यो गौरश्यामाश्च काश्चन ।
चित्तवृत्तिंहरा नृणां कङ्गुश्यामाश्च काश्चन ॥ ९५ ॥

काश्चिदुत्पलवर्णेन समत्वेनाभिवर्णिताः ।
काश्चिद्भ्रमरपक्षाभाः स्निग्धकान्तिमनोहराः ॥ ९६ ॥

काश्चिन्मरालगामिन्यः काश्चिन्मृगविलोचनाः ।
कलकण्ठरवाः काश्चित्काश्चित्सर्वगुणान्विताः ॥ ९७ ॥

अबला योषितः काश्चित् काश्चिन्मुग्धा वरस्त्रियः ।
मध्ये मनोहराः काश्चित्काश्चित्प्रौढविचक्षणाः ॥ ९८ ॥

आस्थानभूषणाः सर्वाः समागत्य नृपालयम् ।
प्रवेश्योभयपार्श्वे च पृष्ठभागे च संस्थिताः ॥ ९९ ॥

उपान्तभ्रमराक्रान्तकेतकीपत्रसन्निभैः ।
कटाक्षैर्वीक्ष्य राजानं हर्षयन्ति मुहुर्मुहुः ॥ १२०० ॥

कान्तदन्तविनिर्मुक्तचन्द्रिकामृतनिर्भ(र्झ)रैः ।
सिञ्चन्त्य इव भूपालं हसितेन वराङ्गनाः ॥ १ ॥

प्रतिरूपगुणाकारैरलङ्कारैरलङ्कृताः ।
कुमारा विनयोपेताः प्रणम्य जनकं नृपम् ॥ २ ॥

आसने च यथोद्दिष्टे यथार्हं पृथिवीभुजां ।
उपविष्टाः पुरोभागे नातिदूरे मनस्विनः ॥ ३ ॥

१ F त्त । २ A क । ३ A ताः । ४ A काश्चित् । ५ A न्ती । ६ F न्ति । ७ A क्नृ । ८ D नं । ९ D ष्टं । १० A जाम् ।

पुरोधाः शुभ्रवसनो रत्नकुण्डलमण्डितः ।
कुमाराभ्यास(श)देशे च निवसेत शुभासने ॥ ४ ॥

अमात्यमन्त्रिसचिवा[1] द्वितीयाङ्गवि(नि)योजिता[2]ः ।
निविशेयुर्यथास्था[3]नं नृपादिष्टासने क्रमात् ॥ ५ ॥

मण्डलाधीश्वराः शूराः सामन्तामात्यका अपि ।
वामदक्षिण[4]पंक्तिस्थाः पुरोभागे महीभुजः ॥ ६ ॥

संविशेयुर्यथास्थानमासनेषु नृपाज्ञया ।
देशाधिकारिणः केचित्केचिद्ग्रामाधिकारिणः ॥ ७ ॥

धर्माधिकारिणः केचित्केचिदर्थाधिकारिणः ।
कामाधिकारिणः केचित्केचित्कोशाधिकारिणः ॥ ८ ॥

बलाधिकारिणः केचित्केचिद्दु[5]र्गाधिकारिणः ।
[6]वस्त्राधिकारिणः केचित्केचिद्भूषाधिकारिणः ॥ ९ ॥

निष्काधिकारिणः केचित्केचिद्द्रुर्णाधिकारिणः ।
[7]तुलाधिकारिणः केचित्केचिन्मुद्राधिकारिणः ॥ १२१० ॥

मूल्याधिकारिणः केचित्केचिदर्घाधिकारिणः ।
दूताधिकारिणः केचित्केचिद्दुष्टाधिकारिणः ॥ ११ ॥

तीर्थाधिकारिणः केचित्केचिन्नावाधिकारिणः ।
मार्गाधिकारिणः केचित्केचिद्द्वाराधिकारिणः ॥ १२ ॥

भाराधिकारिणः केचित्केचिद्द्वीपाधिकारिणः।
द्वास्थाधिकारिणः केचित्केचिन्मल्लाधिकारिणः ॥ १३ ॥

अङ्गाधिकारिणः केचित्केचिद्योधाधिकारिणः ।
देवाधिकारिणः केचित्केचिच्छास्त्राधिकारिणः ॥ १४ ॥

दानाधिकारिणः केचित्केचिद्दण्डाधिकारिणः ।
गजाधिकारिणः केचित्केचिदश्वाधिकारिणः ॥ १५ ॥

१ D वान्। २ F तान्। ३ C F मा। ४ D मध्य। ५ A C F द्रूर्णा। F omits these two lines। ७ D कु। ८ C D add these two lines.

रथाधिकारिणः केचित्केचित्प्राणाधिकारिणः ।
शस्त्राधिकारिणः केचित्केचिच्चापाधिकारिणः ॥ १६ ॥

मृगाधिकारिणः केचित्केचित्पक्षाधिकारिणः ।
स्नानाधिकारिणः केचित्केचित्सूदाधिकारिणः ॥ १७ ॥

तोयाधिकारिणः केचित्केचिच्छत्राधिकारिणः ।
दीपाधिकारिणः केचित्केचित्तैलाधिकारिणः ॥ १८ ॥

गवाधिकारिणः केचित्केचिद्वासाधिकारिणः ।
क्षीराधिकारिणः केचित्केचित्कर्माधिकारिणः ॥ १९ ॥

शय्याधिकारिणः केचित्केचित्कान्ताधिकारिणः ।
पुत्राधिकारिणः केचित्केचिद्विद्याधिकारिणः ॥ १२२० ॥

वाद्याधिकारिणः केचित्केचिद्गेयाधिकारिणः ।
नृत्ताधिकारिणः केचित्केचिच्चित्राधिकारिणः ॥ २१ ॥

पर्णाधिकारिणः केचित्केचित्खन्[1]यधिकारिणः ।
शुल्काधिकारिणः केचित्केचिद्धान्याधिकारिणः ॥ २२ ॥

सुधाधिकारिणः केचित्केचिद्वस्त्राधिकारिणः ।
अश्माधिकारिणः केचित्केचिन्मुद्राधिकारिणः ॥ २३ ॥

पटीपट्टाङ्गि[2]काश्चित्रा दीर्घबाहुविनिर्मिताः ।
धारयन्तः सुखोष्णीषं हेमाभरणभूषिताः ॥ २४ ॥

निविशेयुर्यथास्थानं भक्तिनम्रा नृपेश्वरे ।
कृताञ्जलिपुटाः सर्वे मुखालोकनतत्पराः ॥ २५ ॥

ताम्बूलधारिणो भक्ता विश्वस्ताः खड्गधारिणः ।
राज्ञः समीपे तिष्ठेयुः सावधाना जितेन्द्रियाः ॥ २६ ॥

कवयो गणकाश्चैव वादिनो वाग्मिनस्तथा ।
पाठ[3]काः कथका भट्टाः सूतमागधवन्दिनः ॥ २७ ॥

वाग्गेयकाराश्चै[4]तुरा गाथ(य)का वांशिका अपि ।
वैणिका वाद्यकाराश्च नर्तकाश्चारणा नटाः ॥ २८ ॥

१ A त्स्वन्या । २ F ङ्ग । ३ D चतुराः । ४ A काश्च च ।

वैतालिकाश्चाटुकाराः प्रहासचतुरा[1] नराः ।
अङ्कमल्लांश्च[2] योधाश्च तथान्ये विविधा नराः ॥ २९ ॥

विचित्रवस्त्रैः सौवर्णैर्भूषणैर्भूषिता[3] नराः[4] ।
दिव्यपट्टांशुकोष्णीषभ्राजिता[5] भव्यमूर्तयः ॥ १२३० ॥

शौर्योदार्यैस्तथा युक्ता नृपचित्तानुरञ्जकाः[6] ।
वारं वारं समन्तात्ते जय जीवेतिवादिनः ॥ ३१ ॥

उपासीरन्नृपश्रेष्ठं सेवाधर्मविशारदाः ।
तच्चित्तवेदिनः सर्वे विनयानतमस्तकाः ॥ ३२ ॥

आस्थानमण्डपान्तस्थैः सर्वैः सेवागतैर्नृपम् ।
वीक्ष्यमाणैर्नरैर्भव्य(व्यं) नव(वं)चन्द्रमिवोदितम् ॥ ३३ ॥

नानादेशाधिपान्भूपान्स्वात्मरक्षार्थमागतान् ।
प्र[8]वेशय प्रतीहारेत्यादिशेत्पृथिवीपतिः ॥ ३४ ॥

प्रवेशितान् प्रतीहारैः प्रणतान् दण्डवद्भुवि ।
सप्रसादमिति ब्रूयादुत्तिष्ठत निषीदत ॥ ३५ ॥

नृपाणामासनं योग्यं दापयेन्मानपूर्वकम् ।
आसनेषूपविष्टानां दृष्ट्या सन्तोषमावहेत् ॥ ३६ ॥

वचनेन महाप्रीतिं जनयित्वा गतक्लमान् ।
दिव्यैर्वस्त्रैः पटीपट्टैर्विचित्रैः स्वर्णभूषणैः ॥ ३७ ॥

सुरत्नाभरणैर्भव्यैर्वाजिभिर्वरवारणैः ।
ग्रामैः पुरैस्तथा देशैस्तोषयेत्पार्थिवान्नृपः ॥ ३८ ॥

विसर्जयेच्च तान सर्वान्बहुमानपुरःसरम् ।
आवासेषु सुरम्येषु[10] स्थापयेत्पृथिवीपतिः ॥ ३९ ॥

कांश्चित्प्रसन्नया दृष्ट्या कांश्चिन्मधुरभाषितैः ।
कांश्चित्प्रभूतदानेन कांश्चिन्मानेन[11] हर्षयेत् ॥ १२४० ॥

१ D रानना: । २ F क्लीब । ३ C F षणा । ४ A व । ५ C F वस्त्रां । ६ D रा । ७ रञ्जिताः । ८ A प्रा । ९ D जि । १० A ग । ११ F येन ।

कुमारान्मन्त्रिणोऽमात्यान्सचिवान्मण्डलाधिपान्।
सुभटान्सेवकान्दक्षान्सर्वानप्यधिकारिणः ॥ ४१ ॥

विद्याप्रसादपात्राणि हास्यपात्राणि कानि च।
तोषयित्वा यथायोग्यं सर्वांस्तान्निजमन्दिरम् ॥ ४२ ॥

पुरन्दरनिभो राजा प्रविशेत्केलिकेतनम्।
क्रीडते स्त्रीजनैः सार्धं तोषयेत्ताश्च पूर्ववत् ॥ ४३ ॥

करोत्यास्थानमित्थं यः पार्थिवः प्रथितोन्नतिः।
आस्थानभोग इत्येष कथितः सोमभूभुजा ॥ ४४ ॥

इत्यास्थानभोगः ॥ १० ॥

पुत्राणामुपभोगोऽयं सद्यः संपरिकीर्त्यते।
ऋतुकालमनुल्लङ्घ्य पुत्रार्थी सङ्गमाचरेत् ॥ ४५ ॥

सवर्णासु विशेषेण सतां धर्ममनुस्मरन्।
रजोदिनात्समारभ्य यावत्षोडशवासरान् ॥ ४६ ॥

ऋतुस्तावद्भवेत्स्त्रीणां प्रजापातिविनिर्मितः।
तिथिं द्वितीयां यत्नेन चतुर्थीं च विवर्जयेत् ॥ ४७ ॥

पुष्टा भार्या[1]भियात्कन्यां तस्मात्कुर्वीत तां कृशाम्।
रक्ताधिक्याद्भवेत्कन्या शुक्राधिक्ये भवेत्सुतः ॥ ४८ ॥

तस्माच्छुक्रविशुद्धयर्थं वृष्यं भुञ्जीत भोजनम्।
जाते गर्भे भवेत्स्त्रीणां पाण्डुरं गण्डमण्डलम् ॥ ४९ ॥

कुचयोश्चूचुकं कृष्णं जठरं किञ्चिदुन्नतम्।
तृतीये मासि सम्प्राप्ते कुर्यात्पुंसवनं नृपः ॥ १२५० ॥

श्रवणे मृगशीर्षे च हस्ते पुष्ये पुनर्वसौ।
मूले पुंसंज्ञिते धिष्ण्ये वरेर्का(र्काङ्ग)रबृहस्पतेः ॥ ५१ ॥

माषद्वितयमध्यस्थं यवं घृतसमन्वितम्।
प्राशयेन्नृपतिः पत्नीं वेदमन्त्रमुदीरयेत् ॥ ५२ ॥

१ A स। २ A क्ला।

एतत्पुंसवनं ख्यातं गर्भस्थः[1] पुरुषो भवेत्।
अष्टमे मासि षष्ठे वा धिष्ण्यैः पुन्नामभिर्नृपः ॥ ५३ ॥

सीमन्तोन्नयनं कुर्यादष्टमङ्गलसंज्ञितम्।
उदुम्बरफलैः क्लृप्तं कुर्यात्कण्ठविभूषणम् ॥ ५४ ॥

शल्लीपुच्छसम्भूतकण्टकाग्रेण मूर्धनि।
सीमन्तोन्नयनं कुर्याद्भार्यायाः पृथिवीपतिः ॥ ५५ ॥

वैणिकैर्वादयद्भिश्च सोमराग(गं)मनोहरम्।
उच्चारयेत्सुविप्रेषु साममन्त्राञ्शुभाक्षरान् ॥ ५६ ॥

पटहादिभिरन्यैश्च तूर्यपञ्चमहास्वनैः।
अष्टमङ्गलनामानं कुर्यादुत्सवमूर्जितम् ॥ ५७ ॥

तोषयेद्द्विजमुख्यांश्च गोभूस्वर्णाम्बरादिभिः।
सम्पूर्णे नवमे मासि जाते पुत्रे मनोहरे ॥ ५८ ॥

जातकर्म प्रकुर्वीत स्वगृह्योक्तेन कर्मणा।
सौवर्णमुद्रिकालिप्तं प्राशयेन्मधुसार्पिषी ॥ ५९ ॥

बालकं च ततो मातुः पाययेच्च पयोधरम्।
तत्राभ्युदयिकं श्राद्धं हेम्ना कुर्वीत भूपतिः ॥ १२६० ॥

प्रातःसन्ध्यासु सायाह्ने रात्रावपि शुभावहम्।
दिवसाद्द्वादशादूर्ध्वमुत्तरात्रितये मृगे ॥ ६१ ॥

चित्रानुराधाहस्तेषु श्रवणादित्रयेऽपि च।
अश्विन्यां रोहिणीस्वात्यो रेवत्यां पुष्यमूलयोः ॥ ६२ ॥

शुभे वारे तिथौ लग्ने पुत्रराश्यनुरूपतः।
विख्यातं राजवंश्यानां नाम कुर्यान्महीपतिः ॥ ६३ ॥

सिंहं मल्लं तथा बाहुं पालं वर्म पराक्रमम्।
सेनं चन्द्रं तथा दिव्यसत्त्वं[3] केसरिणं रथम्[4] ॥ ६४ ॥

अनीकं च पदं[5] प्रान्ते कुर्यान्नाम्नो[6] यथारुचि।
षष्ठे मासि शिशोः कार्यमन्नप्राशनमुत्तमम् ॥ ६५ ॥

---

१ A स्थं। २ F प्रतुवति। ३ A त्वके। ४ F D तथा। ५ D दप्रा। ६ D मय।

रेवतीरोहिणीहस्तपुष्यश्रवणयुग्मकैः ।
उत्तरात्रितयेनापि वारे चेन्दोर्बृहस्पतेः ॥ ६६ ॥

बुधभार्गवयोश्चैव शस्ते लग्ने शुभे तिथौ ।
बालकानां स्वकीयानामव्यक्तं शृणुयाद्वचः ॥ ६७ ॥

अर्धार्धभाषितं तेषां गालिदानं मनोहरम् ।
जानुच मणं पश्येत्स्खलितं च पदक्रमम् ॥ ६८ ॥

मातृहस्तावलम्बेन ललितं गमनं शनैः ।
फलप्रदर्शनाद्बालमानीतं मातुरङ्कतः ॥ ६९ ॥

अङ्कमारोपयेद्बालमुरस्कन्धतलं तथा ।
रक्षामन्त्राक्षरैः पत्रैर्लाक्षया परिवेष्टितैः ॥ १२७० ॥

शार्दूलनखसंयुक्तं प्रवालाङ्कुरशोभितम् ।
कपर्दकेन चित्रेण शङ्खेन च विराजितम् ॥ ७१ ॥

अजरामरसम्मिश्रं[1] बिभ्राणं कण्ठसूत्रकम् ।
पञ्चलोहसुकूप्तैश्च वलयैर्भूषिताङ्घ्रिकम् ॥ ७२ ॥

पादयोः कटिदेशे च हेमघर्घरिकायुतम् ।
स्वर्णकुण्डलिकाः प्रान्त(काप्रोत) कर्णपालीविराजितम् ॥ ७३ ॥

अश्वत्थपत्रसङ्कशं(श) मूर्धभूषाङ्कितालकम् ।
मातरं पितरं दृष्ट्वा धावमानमितस्ततः ॥ ७४ ॥

कुमारं सुकुमाराङ्गमालिङ्गेदवनीपतिः ।
कर्णे[2] कूर्चे[3] च कर्षन्तं[4] त(व)र्षन्तं[5] हर्षमात्मनि ॥ ७५ ॥

चुम्बन्तं वदनं भूपः परिष्वज्य सुखीभवेत् ।
योगीन्द्रमिव सानन्दं दिग्वस्त्रमपरिग्रहम् ॥ ७६ ॥

जटिलं भूतिभूषाढ्यं गङ्गाधरमिवात्मजम् ।
विष्णुरुद्रसमाभासं नरक[6]त्राणकारणम्[7] ॥ ७७ ॥

पुत्रं गात्रात्समुत्पन्नमीक्षन्ते पुण्यभागिनः ।
एकद्विवत्सरस्यान्ते कारयेत्कर्णवेधनम् ॥ ७८ ॥

१ D श्र। २ D र्णौ। ३ D र्चौ। ४ D कर्षंतं। ५ A सेनं। ६ A कट। ७ A क।

[1]पुनर्वसुधनिष्ठायां रेवत्यां श्रवणे मृगे ।
उत्तरात्रितये हस्ते चित्रायां मैत्र[2]पुष्ययोः ॥ ७९ ॥

अश्विन्यां शोभने वारे तिथौ लग्ने च शोभने ।
वत्सरद्वितयादूर्ध्वं चूडा कार्या यथाकुलम् ॥ १२८० ॥

अश्विनीरेवतीमूलज्येष्ठासु श्रवण[4]त्रये ।
हस्तत्रये च पुष्ये च तथैवादितिदैवते ॥ ८१ ॥

शस्ते वारे शुभे लग्ने तिथौ च शुभशंसिनि ।
अन्नप्राशनधिष्ण्येषु ध्रुवनक्षत्रवर्जिते ॥ ८२ ॥

भौमे सौम्ये गुरौ शुक्रे कुर्यान्मौञ्जीनिबन्धनम् ।
वर्षे गर्भाष्टमे वापि गर्भैकादशकेऽपि वा ॥ ८३ ॥

व्रतबन्धं प्रकुर्वीत क्षत्रियस्य यथोचितम् ।
आर्द्रायां श्रवणे स्वात्यां चित्रायां हस्तमूलयोः ॥ ८४ ॥

पूर्वात्रये च रेवत्यामाश्लेषायां पुनर्वसौ ।
मृगशीर्षे धनिष्ठायामश्विनीपुष्ययोरपि ॥ ८५ ॥

वारे बुधे गुरौ शुक्रे विद्यारम्भं च कारयेत् ।
वेदमध्यापयेत्पुत्रं[5](त्रान्) श[6]स्त्रविद्यां च शिक्षयेत् ॥ ८६ ॥

गजाश्वरोहणे तज्ज्ञं[7](ज्ज्ञान्) रथयाने[8] विशारदम्[9] (दान्)।
शस्त्रशास्त्रकृताभ्यासान् गजारोहे सुशिक्षितान् ॥ ८७ ॥

अश्ववाहसुनिष्णातान्सद्विद्यैस्तान्परीक्षयेत् ।[10][11]
एकैकं क्रमशः पुत्रं परीक्षेत विचक्षणः ॥ ८८ ॥

पाटवं च बलं प्रज्ञां कलाकौशलमेव च ।
श्रुतौ तर्के तथा धर्मे काव्ये व्याकरणेऽपि च ॥ ८९ ॥

धनुर्वेदे भूमिवले स्वरशास्त्रे कलास्वपि ।
दृढघाते दूरपाते लघुसन्धानमोक्षणे ॥ १२९० ॥

१ F omits these two linse । २ A सौ । ३ D मि । ४ A णा । ५ A त्रान् । ६ D शा । ७ A ज्ज्ञान् ? । ८ D न । ९ A दान् ? । १० D प्रवीणान् सर्वकर्मसु । ११ A बाहु ।

विचित्रव्यधने लक्ष्ये चापविद्यां परीक्षयेत्।
दूरे दृढं चले लक्ष्यं लाघवं बाणमोक्षणे ॥ ९१ ॥

विद्योत्कर्षं परीक्षेत बल(लं)कोदण्डकर्षणे।
गात्रेषु सौष्ठवं पाद[1]सञ्चारे लाघवं तथा ॥ ९२ ॥

हस्ते निष्ठुरतां दृष्टौ शौर्यं स्थैर्यं च चेतसि।
वितस्तित्रिचतुःपञ्चभेदाः ख्याताऽसिधेनुषु ॥ ९३ ॥

खड्गं कुन्तं गदां शक्तिं चक्रं शूलपरश्वधे।
परप्रयुक्तघातेषु वञ्चनात्प्रौढिरि[2]ष्यते ॥ ९४ ॥

क्षुरिकायां तथा लब्ध्यां[3] बन्धचातुर्यमीक्षते।
परस्य बाहुसंरोधौ (धो) वीक्ष्यन्ते (ते) पाणिपाद(त)तः ॥ ९५ ॥

एवमस्त्रप्रकर्षं तु कुमाराणां मनस्विनाम्।
कृतास्त्राणां परीक्षेत तज्ज्ञैः सह महीपतिः ॥ ९६ ॥

गजाश्वा[4]रोहणे[5] तेषां प्राविण्यं पृथिवीश्वरः।
कुमाराणां परीक्षेत लक्ष्य[6]लक्षणकोविदः ॥ ९७ ॥

तेषामुत्कर्षमन्विच्छेत्स्वस्मादप्यवनीपतिः।
गुणाधिकतराः पुत्राः प्राप्यन्ते सुकृताधिकैः ॥ ९८ ॥

विनीताः श्रुतसम्पन्नाः शास्त्रेषु च कृतश्रमाः।
गजाश्वा[7]रोहणे दक्षा लभ्यन्ते सुकृतैः सुताः ॥ ९९ ॥

धर्मज्ञाः शुचयो धीराः पितृ[8]शुश्रूषणे रताः।
रूपौदार्यगुणोपेता दृश्यन्ते सुकृतैः सुताः ॥ १३०० ॥

एवं गुणाधिकान् पुत्रान् दृष्ट्वा रोमाञ्चकञ्चुकः।
आलिङ्ग्य मूर्ध्न्युपाघ्राय चाशीर्भिरभिनन्दयेत् ॥ १ ॥

पुत्राणां दर्शनं चन्द्रदर्शनादपि सौख्यदम्।
पुत्रगात्रपरिष्वङ्गश्चन्दनादपि शीतलः ॥ २ ॥

१ D दं। २ D ढमी। ३ A ध्यां। ४ D श्व। ५ F णै। ६ D लक्षणं लक्ष्य। ७ D श्व। ८ F तुः।

इति ब्रुवन् महीपालो वाग्भिरानन्द्य पुत्रकान् ।
गजाश्वरत्नभूषाभिस्तोषयित्वा सुखी भवेत् ॥ ३ ॥

उपाध्यायेषु सर्वेषु ग्रामपट्टनखेटकम् ।
वस्त्राणि काञ्चनं भूमिं मानपूर्वकमर्पयेत् ॥ ४ ॥

सम्प्राप्तयौवनान्पुत्रान्कृतगोदानमङ्गलान् ।
समावर्तनसम्पन्नान्कामभोगसुखोचितान् ॥ ५ ॥

रूपलावण्यवर्णाढ्यां[1] लक्षणैः समलङ्कृतां[2] ।
महाकुलसमुत्पन्नां[3] समजातिनिरूपितां[4] ॥ ६ ॥

विवाहविधिना राजा रत्नभूषणभूषितान् ।
कुमारान्प्रापयेत्कन्यां (न्या) धर्मार्थं[5] सुखमन्दिरम्[6] ॥ ७ ॥

पापा(पा)स्त्रिषष्ठलाभस्था(स्था)स्त्यक्त्वा[7] मङ्गलमष्टमम् ।
शुक्लपक्षे तिथौ शस्ते शोभनग्रहवासरे ॥ ८ ॥

कुर्याद्विवाहं भूपालः पुत्रस्यामित्रकर्शिनः[8] ।
शोभने सुविशाले च मध्यवेदीविराजिते ॥ ९ ॥

पटीपट्टवितानेन स्तम्भैः पट्टावगुण्ठितैः[9] ।
तोरणालङ्कृतद्वारे गोमयालिप्तभूमिके ॥ १३१० ॥

पुष्पप्रकरशोभाढ्ये मण्डपे सुमनोहरे ।
कृत्वा नान्दीमुखं श्राद्धं संपूज्य कुलदेवताः ॥ ११

पुण्याहवाचनं कृत्वा मुहूर्ते गणकोदिते[10] ।
मधुपर्केण सम्मान्यं सितवस्त्रैर्विभूषितम् ॥ १२ ॥

मुद्रिकालङ्कृतं पुत्रं वेदीमारोपयेच्छनैः ।
तण्डुलैः कारयेत्पुञ्जौ पूर्वापरसमौ[11] स्थितौ ॥ १३ ॥

सितं दुकूलं तन्मध्ये कल्पयेद्व्यवधायकम् ।
पुत्रं प्राचीमुखं कृत्वा तण्डुलोपरिवर्तिनम् ॥ १४ ॥

---

१ D ढ्य ल । २ D तान् । ३ D न्नान् । ४ D तान् । ५ F स्वामि । ६ C रे । ७ A क्त्वा । ८ A नेप्र । ९ D र्षणः । १० F दा । ११ D म ।

पश्चिमाशामुखीं कन्यां पुञ्जस्योपरिवर्तिनीम्।
उभाभ्यां करयोर्दत्वा तण्डुलान् जीरकादिकान्॥ १५॥

जाते लग्ने तु मध्यस्थं पटमुत्सारयेत्ततः।
हस्तस्थांस्तण्डुलान्कन्याकुमारौ क्षिपतौ मिथः॥ १६॥

परस्परमुखाम्भोजविनिवेशितलोचनौ।
कन्याया दक्षिणं पाणिं कुमारकरमध्यगम्॥ १७॥

कृत्वा कन्यापिता कन्यां धारापूर्वं समर्पयेत्।
कुमारं च तथा कन्यां वेष्टयेत् पञ्चतन्तुभिः॥ १८॥

प्रादक्षिण्यात्पञ्चवारान्[1] कृतं सूत्रं समाचरेत्।
निष्कासितं प्रयत्नेन उभाभ्यां पादयोरधः॥ १९॥

कुङ्कुमेन समालिप्य कङ्कणं तद्विधीयते।
अनेनैव प्रकारेण कन्यायाः कङ्कणं न्यसेत्॥ १३२०॥

ततो होमं प्रकुर्वीत यथोक्तविधिना द्विजः।
कनिष्ठामङ्गुलीं धृत्वा[2] पत्युः पत्नी व्रजेदनु॥ २१॥

प्रदक्षिणक्रमेणैव कृते होमे यथाविधि।
वारत्रयं भ्रमित्वा तु सप्ततण्डुलपुञ्जकान्[4]॥ २२॥

आक्रमेत्पदविन्यासैस्ततः[3] पट्टासने विशेत्।
वामे पार्श्वे विधातव्या पत्युः पत्नी शुभानना॥ २३॥

ततो वस्त्राणि रम्याणि[6] रत्नानि भूषणानि च।
गजाश्वमहिषीर्गाश्च दासीदासान्धनं बहु॥ २४॥

दद्यात्पुत्राय तत्पत्न्यै[7] विवाहोत्सवमङ्गले।
विप्रांश्च तोषयेत्तत्र वस्त्रकाञ्चनभूषणैः॥ २५॥

यथार्हं तोषयेदन्यान्वस्त्रैः स्वर्णैश्च भूषणैः।
वादित्राणां महानादैः शोभनैः शङ्खनिःस्वनैः॥ २६॥

१ A न्पक्षवारान्कृत। २ A ले। ३ D क्र। ४ A पूंज। ५ A का। ६ A रत्नानि काचनं। ७ A त्यै।

गीतैर्मङ्गलवाक्यैश्च वेदमन्त्रैः शुभार्थकैः ।
बन्दिभिः पठ्यमानैश्च जयमालाशुभाक्षरैः ॥ २७ ॥

पूरयेद्व्योम सर्वत्र दिशश्च विदिशस्तथा ।
तोषयेदन्नपानैश्च ताम्बूलैरितरान्जनान् ॥ २८ ॥

हर्षयेदासवैर्मद्यैः कान्तावृन्दं मनोहरम् ।
गोकुलं घासदानैश्च परितोषं नयेन्नृपः ॥ २९ ॥

एवं निरन्तरं कार्यं विवाहेऽह्नां चतुष्टयम् ।
चतुर्थे वासरे रात्रौ कुर्याच्छृङ्गारमूर्जितम् ॥ १३३० ॥

वरवध्वोर्यथाशोभं लोकलोचनहारकम् ।
आहूय करिणां वृन्दं हेमघण्टानिनादितम् ॥ ३१ ॥

कर्णचामरशोभाढ्यं सिन्दूरारुणमस्तकम् ।
पुष्पकैः शोभितं दान्तं महामालाभियोजितम् ॥ ३२ ॥

आरोहार्थं कुमारस्य तत्सेवकजनस्य च ।
उद्दीप्य हस्तदीपांश्च शतशोऽथ सहस्रशः ॥ ३३ ॥

तारालोकमिवातन्वन् मेदिन्यां मेदिनीपतिः ।
कुमारं कृतशृङ्गारं तद्वधूं कृतमण्डनाम् ॥ ३४ ॥

आरोप्य करिणीं यत्नान्मुक्तांपुष्पकधारिणीम् ।
आरोपयेद्वेशवेश्याः कान्तावृन्दमनिन्दितम् ॥ ३५ ॥

इन्दुवक्त्रसलावण्यमिन्दीवरदलेक्षणम् ।
ततः पञ्चमहाशब्दैर्वाद्यमानैर्व्रजेद्वरः ॥ ३६ ॥

पुरवीथ्यां पुरन्ध्रीभिः पूजितः पुरवासिनाम् ।
वरयात्रां विनिर्वर्त्य समागत्य नृपालयम् ॥ ३७ ॥

अवतीर्य वशापृष्ठात्प्रणमेज्जनकं निजम् ।
एवं विवाहिताः पुत्राः रमन्ते रमणीयुताः ॥ ३८ ॥

---

१ ङ १ A व । ३ F क । ३ A व ।

लभन्ते च प्रजाः श्रेष्ठा रूपशीलगुणान्विताः।
तेषां पुत्रांश्च कन्याश्च स्वाङ्कमारोप्य लालयन्॥ ३९॥

निर्भरानन्दसन्दोहः पुत्रभोगमवाप्नुयात्।
एवं शिशूंल्लालयित्वा शिक्षयित्वा विवाह्य च॥ १३४०॥

तत्प्रजाः पालयेद्यत्तु पुत्रभोगः प्रकीर्तितः।
कथितः पुत्रभोगोऽयं [1]सोमेश्वरमहीभुजा॥ ४१॥

इति पुत्रभोगः॥ १२॥

अन्नभोगोऽयमधुना द्वयोरन्यो निगद्यते।
बान्धवान्मण्डपाधीशान्सामन्तान् मान्य[2]कान भटान्॥ ४२॥

आश्रितान् सुहृदो भृत्यान् गीतवाद्यविशारदान्।
आहूय स्वोचिते स्थाने निर्वि(वे)श्याग्रे तु भोजयेत्॥ ४३॥

पुत्रैः पौत्रैः प्रपौत्रैश्च सह भुञ्जीत पार्थिवः।
भोज्यं भक्ष्यं तथा पेयं लेह्यं चोष्यं तथैव च॥ ४४॥

इति पञ्चविधं हृद्यं पथ्यं भुञ्जीत भूपतिः।
रक्तशालिर्महाशालिर्गन्धशालिः कलिङ्गकः॥ ४५॥

[3]मुण्डशालिः स्थूलशालिः सूक्ष्मशालिः सषष्ठिकः।
रक्तत्वय(त्वाद्र)क्तशालिः स्यान्महाशालिर्महाकृतिः॥ ४६॥

सुगन्धिर्गन्धशालिः स्यात्कलिङ्गोत्थः कलिङ्गकः।
शूकशून्यो मुण्डशालिः स्थूलशालिस्तदाकृतिः॥ ४७॥

सौक्ष्म्याच्चु सूक्ष्मशालिः स्याद्द्विमासः षष्ठिकः स्मृतः।
एतान् शालीन् पृथक् सर्वान्मुसलैर्वितुषीकृतान्॥ ४८॥

निक्षिप्य तण्डुलान् पट्टे विसृजेत्कणकांस्ततः।
पाषाणमृत्तिकाशालीतृणपर्णं तुषं तथा॥ ४९॥

यत्नाद्विकृष्यापनयेद्दासीभिस्तण्डुलै[4]स्थितान्।
अखण्डान् शोधितानेव क्षालितान् बहुशो[5] जलैः॥ १३५०॥

१ C D श्रीमत्सोम। २ C ल्य। ३ D omits these two lines। ४ A लां F लान्। ५ D शस्तशः।

तण्डुलान् कुन्दसङ्काशांस्तोयान्तर्धारितांश्चिरम्[1] ।
स्थाल्यां ताम्रकृतायां वा मृज्जातायामथापि वा ॥ ५१ ॥

तण्डुलत्रिगुणं तोयं निक्षिपेच्च पिधापयेत् ।
वाससा शशिशुभ्रेण धौतेन च घनेन च ॥ ५२ ॥

चुल्यां निधाय निर्धूमे वन्हौ तत् क्वाथयेज्जलम् ।
सुतप्ते बुद्बुदोपेते स्वल्पबाष्पसमन्विते ॥ ५३ ॥

तण्डुलानावपेत्स्थाल्यां[2] दर्व्या च परिघट्टयेत् ।
सिक्थं[3] विमर्द्य[4] वीक्षेत वारं वारं विचक्षणः ॥ ५४ ॥

मृदु(द्रू)भूते च तत्सिक्ते[5] (क्थे) किञ्चिद्वा कणगर्भिते ।
तत्र[6] दुग्धं घृतं वापि निक्षिप्योत्तारयेत्ततः ॥ ५५ ॥

स्थाल्यास्ये पिटकं दत्वा मण्डं[7] तं स्रावयेद्गुणः(णी) ।
ईषदुद्ध(र्व)रितं मण्डमूष्मणा परिशोषयेत् ॥ ५६ ॥

एवं भक्तं सुपक्वं यद्राजयोग्यं तदुत्तमम् ।
राजमुद्गास्तथा पीता निर्ष्या(ष्पा)वाश्चणका अपि ॥ ५७ ॥

कृष्णाढक्यस्तथा माषा मसूरा राजमाषकाः ।
सूपकर्मणि[8] सप्तैते नियोज्याः सूपकारकैः ॥ ५८ ॥

दलिताऽदलिताश्चैते पचनीया यथारुचि ।
चणका राजमाषाश्च मसूरा राजमुद्गकाः[9] ॥ ५९ ॥

घरट्टै[10]र्दलिताः[11] कार्याः पाकार्थं हि विचक्षणैः ।
किञ्चिद्भ्रष्टास्तथाढक्यो यन्त्रावर्तै[12]र्द्विधाकृताः ॥ १३६० ॥

विदली च कृताः सम्यक् शूर्पकैर्वितुषीकृताः ।
स्थाल्यां शीतोदकं क्षिप्त्वा विदलैः सममानतः ॥ ६१ ॥

आवपेद्विदलान्पश्चाच्चुल्यामारोपयेत्ततः ।
मृद्वग्नि[13]पच्यमानेऽन्तर्हिङ्गुतोयं विनिक्षिपेत् ॥ ६२ ॥

---

१ A तयं। २ A ल्याइ। ३ A क्तं च्छं। ४ D मृध्य। ५ D क्ते। ६ D क्रं। ७ D मण्डमास्रावये द्गुणः। ८ F स्या A ष्पो। ९ D माष। १० A टैः। ११ F लिः। १२ D र्तैं। १३ D omits these two lines।

वर्णार्थं रजनीचूर्णमीषत्तत्र नियोजयेत् ।
मुहुर्मुहुर्क्षिपेत्तोयं यावत्पाकस्य पूर्णता ॥ ६३ ॥

सुश्लक्ष्णं सैन्धवं कृत्वा विंशत्यंशेन निक्षिपेत् ।
वर्णतः स्वादुता ( स्वादतः ) गन्धान्मार्दवाल्लाघवादपि ॥ ६४ ॥

एवं विदलपाकस्य सम्यक्सिद्धिरुदाहृता ।
निष्पावा मेचकाढक्यो हिङ्गुना परिवर्जिताः ॥ ६५ ॥

अभिन्नाः पूर्ववत् पाक्या (च्या) हरिद्राचूर्णकं विना ।
मसूरमाषपाकेषु हिङ्गुतोयं विनिक्षिपेत् ॥ ६६ ॥

इतरः पूर्ववत् कार्यः पाकः पाकविचक्षणैः ।
प्रक्षालितान्वरान्मुद्गान् समतोये विनिक्षिपेत् ॥ ६७ ॥

चुल्यां मुद्वग्निना पाकः कर्तव्यः सूपकारकैः ।
पच्यमानेषु मुद्गेषु हिङ्गुवारि विनिक्षिपेत् ॥ ६८ ॥

आर्द्रकस्य च खण्डानि सूक्ष्माणि च विनिक्षिपेत् ।
वार्ताकं पाटितं तैलं भृ (लभृ) ष्टं तत्र विनिक्षिपेत् ॥ ६९ ॥

तैलभृष्टा मृदूभूताः क्षिपेद्वा बिसचक्रिकाः ।
बीजानि वा प्रियालस्य क्षिप्त्वा दर्व्या विवर्तयेत् ॥ १३७० ॥

पुनः पुनः क्षिपेत्तोयं स्तोकं स्तोकं विचक्षणः ।
केचिदिच्छन्ति रुच्यर्थं मेषमांसस्य खण्डकान् ॥ ७१ ॥

वृक्कान्वापि द्विधा भिन्नान्मेदसः शकलानि वा ।
मुहुः सूपे सुनिष्पन्ने चूर्णितं मरिचं क्षिपेत् ॥ ७२ ॥

उत्तार्य नागरं चूर्णं क्षिप्त्वा दर्व्या विघट्टयेत् ।
श्यामाककङ्गुनीवारगन्धशालिसुतण्डुलैः ॥ ७३ ॥

सरवेष्टिक(त)सेर्वाकैर्दिवसैर्लघुविस्तृतैः ।
चिरप्रसूतमहिषीपयसा पायसं[10] पचेत् ॥ ७४ ॥

१ A रा? रि? रे?। २ D तामौ। ३ D जकानि। ४ A का। ५ A घ। ६ D षु। ७ D स।
८ A का। ९ D प। १० A D सा C सां।

पायसं लेहने योग्यं स्वादुगन्धं मनोहरम् ।
गोधूमाः क्षालिता शुभ्राः शोषिता रविरश्मिभिः ॥ ७५ ॥

घरट्टैश्चूर्णिताः श्लक्ष्णाश्चालन्या वितुषीकृताः ।
गोधूमचूर्णकं श्लक्ष्णं किंचिद्घृतविमिश्रितम् ॥ ७६ ॥

लवणेन च संयुक्तं क्षीरनीरेण पिण्डि[1]तम् ।
सुमहत्यां काष्ठपा[2]त्र्यां करास्फालैर्विमर्दयेत् ॥ ७७ ॥

मर्दितं चिक्कणीभूतं गोलकान्परिकल्पयेत् ।
स्नेहाभ्यक्तैः करतलैः शालिचूर्णैर्विरूक्षितान् ॥ ७८ ॥

प्रसारयेत्गोलकांस्तान् करसञ्चारवर्तनैः ।
विस्तृता मण्डकाः श्लक्ष्णाः सितपट्टसमप्रभाः ॥ ७९ ॥

प्रयत्नान्निक्षिपेत्तज्ज्ञस्तप्तखर्परमस्तके ।
पक्वांश्चापनयेच्छीघ्रं यावत्कार्ष्ण्यं न जायते ॥ १३८० ॥

चतस्रश्च चतस्रश्च घटि[3]ता मण्डका वराः ।
गोलान्प्रसारितान्पाणावङ्गारेषु विनिक्षिपेत् ॥ ८१ ॥

अङ्गारपोलिकाः शस्ताः किञ्चित्कृष्णत्वमागताः ।
गोलकान्पिष्टकालिप्तान् पेषण्या तान्प्रसारयेत् ॥ ८२ ॥

सुतप्ततापनिक्षिप्तानीषत्पक्वान्विवर्तयेत् ।
[4]कर्परेपि पचेदेवं पेलिकानामयं क्रमः ॥ ८३ ॥

तैलपूर्णकटाहे तु सुतप्ते सोहलां[5] पचेत् ।
उत्तानपाकसंसिद्धाः कठिनाः सोहला म[6]ताः ॥ ८४ ॥

तैलमग्नाः पीतवर्णा[8] मृद्व्यः[7] (द्व्यः) पाहलिकाः स्मृताः ।
तनुप्रसारितां[9]न्गोलान्ताप्यां[10] स्नेहेन पा[11]चितान् ॥ ८५ ॥

उपर्युपरि निक्षिप्ता(ः) पत्रिका विपचेत्सुधीः ।
गोधूमचूर्णादुद्धृत्य शूर्पेणाभ्याहतान् कणान् ॥ ८६ ॥

१ F पीडि D पिण्डकम् । २ यन्त्र्यां । ३ D ट्टि । ४ D ख । ५ A लो । ६ A सि । ७ D द्व । ८ A तार्गी । ९ D र्ला ता । १० A प्यान् । ११ A साद्धि ।

दुग्धाक्तान् घृतपक्कांश्च सितया च विमिश्रितान्।
एलामरिचचूर्णेन युक्तान्कां[1]सारसंज्ञितान् ॥ ८७ ॥

गोलकेन समावेष्ट्य तैलेनोदुम्बरान्पचेत्।
उत्क्वाथ्य विदलान् पिष्ट्वा चणकप्र[2]भृतीन् शुभान् ॥ ८८ ॥

हिङ्गुसैन्धवसंयुक्तान् शर्करापरिमिश्रितान्।
मरिचैलाविचूर्णेन युक्तान्गोलकवेष्टितान् ॥ ८९ ॥

किञ्चित्प्रसारिते तैले पूरिका [3]विपचेच्छुभाः।
एवं ताप्यां पचेदन्याः पूरिकाश्च विचक्षणः ॥ १३९० ॥

हरिमन्थस्य विदलं हिङ्गुजीरकमिश्रितम्।
लवणेन च संयुक्तमार्द्रकेण समन्वितम्। ॥ ९१ ॥

वेष्टयित्वा गोलकेन वेष्टिका खर्परे पचेत्।
विदलं चणकस्यैवं[4] पूर्वसंम्भारसंस्कृतम् ॥ ९२ ॥

ताप्यां तैले[6](ल) विलिप्तायां धोसकान्विपचेद्बुधः।
माषस्य राजमाषस्य वट्टाणस्य च धोसकान् ॥ ९३ ॥

अनेनैव प्रकारेण विपचेत्पाकतत्त्ववित्।
वट्टाणकस्य विदलं विदलं चणकस्य च ॥ ९४ ॥

चूर्णितं वारिणा सार्धं सर्पिषा परिभावितम्।
सैन्धवेन च संयुक्तं कण्डुना परिघट्टितम् ॥ ९५ ॥

निष्पावचूर्णसंयुक्तं पेषण्यां च प्रसारितम्।
कटाहे तैलसंपूर्णे कटकर्णान्प्रपाचयेत् ॥ ९६ ॥

यावद्बुद्बुदसंकाशा भवन्ति कनकत्विषः।
माषस्य विदलाँन् क्लिन्नान्निस्तुषान्हस्तलोडनैः ॥ ९७ ॥

ततः सम्पेष्य पेषण्यां सम्भारेण विमिश्रितान्।
स्थाल्यां विमर्द्य बहुशः स्थापयेत्तदहस्ततः ॥ ९८ ॥

आम्लीभूतं माषपिष्टं वँटिकासु विनिक्षिपेत्।
वस्त्रगर्भाभिरन्याभिः पिधाय परिपाचयेत् ॥ ९९ ॥

अवतार्यात्र मरिचं चूर्णितं विकिरेदनु।
घृताक्तां हिङ्गुसर्पिभ्यां जीरकेण च धूपयेत ॥ १४०० ॥

१ D क्तास। २ F कृती D कृता। ३ A ऽपि। ४ D व। ५ A संस्का। ६ A लं। ७ A ला क्लि।
८ A पि। ९ D स्ततः। १० A कः।

सुशीता धवला(:) श्लक्ष्णा एता इडेरिका वराः।
तस्यैव माषपिष्टस्य गोलकान्विस्तृतान्घनान् ॥ १ ॥

पञ्चभिः सप्तभिर्वापि छिद्रैश्च परिशोभितान्।
तप्ततैले पचेद्यावल्लौहित्यं तेषु जायते ॥ २ ॥

घारिकासंज्ञया ख्याता भक्ष्येषु सुमनोहराः।
निश्छिद्रा घारिका(काः)पक्वा मथिते शर्करायुते ॥ ३ ॥

एलामरिचसंयुक्ते निक्षिप्ता वटि(ट)काभिधाः।
त एव वटकाः क्षिप्ताः काञ्चिके काञ्जिकाभिधाः ॥ ४ ॥

यत्र यत्र द्रवद्रव्ये तन्नाम्ना वटकास्तु ते।
आरनालेन सान्द्रेण दध्ना सुमथितेन च ॥ ५ ॥

सैन्धवार्द्रकधान्याकजीरकं च विमिश्रयेत्।
मरिचानि द्विधा कृत्वा क्षिपेत्तत्र तु पाकवित् ॥ ६ ॥

दर्व्या विघट्टयन्सर्वं पचेद्यावद्घनीभवेत्।
उत्तार्य वटकान्क्षिप्त्वा विकिरेन्मारिचं रजः ॥ ७ ॥

हिङ्गुना धूपयेत्सम्यग् वटकास्ते मनोभिधाः।
दुग्धमुत्क्वाथ्य तन्मध्ये तक्रमम्लं विनिक्षिपेत् ॥ ८ ॥

हित्वा तोयं घनीभूतं वस्त्रबद्धं पृथक्कृतम्।
शालितण्डुलपिष्टेन मिश्रितं परिपेषितम् ॥ ९ ॥

नानाकारैः सुघटितं सर्पिषा परिपाचितम्।
पक्वशर्करया सिक्तमेलाचूर्णेन वासितम् ॥ १४१० ॥

क्षीरप्रकारनामेदं भक्ष्यं मृष्टं मनोहरम्।
शर्करां वारिसंयुक्तां ताम्रपात्रे विपाचयेत् ॥ ११ ॥

१ D लः। २ D न्दु। ३ A स। ४ D त्तै। ५ A क्षो। ६ D विनि। ७ D ण्टि। ८ A तिघट्टयेत्स। ९ A जं। १० A ना। ११ D रयापि च।

अर्धपाके क्षिपेद्दुग्धं तक्रं वापि यथारुचि ।
तेन मुञ्चेन्मलं सा तु शर्करा कथिता सती ॥ १२ ॥

निर्मलेन च वस्त्रेण गालयेत्तां मुहुर्मुहुः ।
मृदौ पाके द्रुता[1] पेया मध्यमे मधुसन्निभा ॥ १३ ॥

खरे तु कठिना भक्ष्या साधिके शर्करा भवेत् ।
खरपाके सुसिद्धायाः[2] सिताया[3] दृढ[4]सम्पुटे[5] ॥ १४ ॥

नानारूपाणि कुर्वीत खण्डपाकविशारदः ।
शोधितायां सितायां तु क्षीरं संमिश्रयेत्समम् ॥ १५ ॥

खरपाकावधिर्यावत्तावत्तत्क्वा[6]थयेत्पुनः ।
उत्तार्य नागरं तीक्ष्णमेलाकर्पूरकेसरैः ॥ १६ ॥

निक्षिप्य गोलकाः कार्या नाम्ना वर्षोलकास्तुते ।
वराहपललं स्निग्धं मृष्टं[7] सारङ्गजं [8]पलम् ॥ १७ ॥

हरिणस्यामिषं पथ्यं रूक्षं मांसं शशोद्भवम् ।
आविकं तरसं रुच्यं लघुं[9]क्रव्यम्(म)जो[10]द्भवम् ॥ १८ ॥

मत्स्यमांसं भवेद्वृष्यं शाकुनं लघु कीर्तितम् ।
रुरुसम्बरसंभूतं पुष्टं चेद्रुच्यमीरितम् ॥ १९ ॥

मांसान्यन्यानि बल्यानि रसनाप्रीतिदानि च ।
कृशस्य व्याधियुक्तस्य जराजर्जरितस्य च ॥ १४२० ॥

शावकस्य च शुष्कस्य विषसन्दू[11]षितस्य च ।
[12]वारिणा निहतस्यापि श्रमशोषमृतस्य च ॥ २१ ॥

क्लिन्नस्य पूतिगन्धस्य मांसानि परिवर्जयेत् ।
पृष्टवंशस्य पार्श्वस्थं बहिरन्तश्च संस्थितम् ॥ २२ ॥

जघनस्य घनं पिण्डं पुच्छमूलसमुद्भवम् ।
क्रोडदेशोद्भवं चैव कक्षाभागस्य पूरकम् ॥ २३ ॥

पार्श्वयोः संस्थितं चैव कुक्षिसन्धिं[13]विलेपकम् ।
आस्यैं[14](अंस)पूर्वांशसंभूतं मुकुलं हृदयोद्भवम् ॥ २४ ॥

१ A हृ । २ D द्धाः स्युः । ३ D त । ४ A पञ्च । ५ A टैः । ६ F क । ७ A ष्ट । ८ A फ । ९ घुक्रव । १० D जा । ११ D म्दू । १२ D न्धि । १४ A अंश ।

कालखण्डं तथा वृक्को गुदान्त्रं च तथान्त्रकम्[1] ।
अक्षिणी रसनाकर्णावूधो[2] वृषणकर्णकम् ॥ २५ ॥
पशु(शु)कायां स(सु)संलग्नं वपामष्टिस्क(म्मास्तिष्क)मर्ज[3] [4](माज)कम् ।
पादाः शृङ्गखुरास्त्वक् च श्रेष्ठमेतत्पलं मतम् ॥ २६ ॥
एतेषु मांसवर्गेषु[5] केषाश्चित्किंचिदुत्तमम् ।
वराहं सितवस्त्रेण प्रच्छाद्योत्फुल्लवारिणा ॥ २७ ॥
गण्डकेन[6] सदण्डेन तावत्सिश्चेन्मुहुर्मुहुः ।
यावत्तज्जातरोमाणि प्रोन्मूल्यन्ते सुखं करैः ॥ २८ ॥
पश्चात्कर्त्रिकया रोमाण्युद्धृष्टाण्यपसारयेत् ।
अथवा कर्दमालिप्तं दहेत्तं तृणवह्निना ॥ २९ ॥
सुखोत्पाव्यानि रोमाणि पूर्ववच्चापसारयेत् ।
आजानुसन्धिर्मूलाङ्घ्रि तृणैः प्रच्छाद्य तं देहेत् ॥ १४३० ॥
कठिनत्वमुपायातं क्षालयेन्निर्मलैर्जलैः ।
पाण्डुरं बिससङ्काशं समं संस्थापितं कटे[10] ॥ ३१ ॥
आमूर्धं प्रस्थापयति[11] कर्त्रिकापरिपाटितम्[12] ।
सारीफलकरेखाभ्यां[13] चित्तं[14] (वच्च त) स्यायामसुण्ठिकाम्[15] (शुण्ठकान्) ॥३२॥
चतुरस्रीकृतान्खण्डान्शूलमोतान्प्रतापयेत्[16] ।
अङ्गारेषु प्रभूतेषु घृतबिन्दुस्रवावधि ॥ ३३ ॥
पश्चान्मरिचचूर्णेन विकिरेत्सैन्धवं[17] ततः ।
अथर्वाम्लपरिस्विन्नान्[18] पूर्ववत्परिकल्पयेत् ॥ ३४ ॥
अथवा दारितान्कृत्वा त्वक्शेषान्लवणान्वितान् ।
भृज्ये[20](ज्जे)दङ्गारपुञ्जेषु शुण्ठकानमृतोपमान् ॥ ३५ ॥
स्विन्नानां शुण्ठकानां च मेदोभागं[21] प्रगृह्य च ।
ताडपत्रसमाकाराः कृत्वा चक्कोलिकाः[22] शुभाः ॥ ३६ ॥
मथिते शर्करायुक्ते दधन्येलाविमिश्रिते ।
कर्पूरवासिते तत्र रुच्याश्चक्कोलिकाः[23] क्षिपेत् ॥ ३७ ॥

१ A म्र। २ A दू? यू, वूधौ। ३ D मृ। ४ A मर्जु। ५ D र्ये। ६ D गुरुणा A ण्डुवौ। ७ D तप्त। ८ A भूनाङ्घ्रि। ९ A हरेत्। १० D ठे। ११ D न्ति। १२ D तैर्या। १३ D च। १४ A त। १५ D ण्ठ। १६ F पात। १७ A वेन च। १८ D F तान् परितः स्वि। १९ A म्रांन्। २० D जे। २१ F मोद्गा। २२ क। २३ A क।

मांसमेदोमयान्शुण्ठान् पूर्ववच्छकलीकृतान्।
मथिते राजिकायुक्ते मातुलिङ्गककेसरे ॥ ३८ ॥

धूपिते हिङ्गुना सम्यक् दध्नि चक्कलिकाः क्षिपेत्।
घृते वा चक्कलीं भृष्ट्वा किरेदेला सशर्कराम् ॥ ३९ ॥

अथवा मातुलुङ्गस्य सुपक्वस्य च केसरैः।
सूक्ष्मैरार्द्रकखण्डैश्च केसराभैर्(म्लै)मनोहरैः ॥ १४४० ॥

चूर्णितं मरिचं राजिसैन्धवैर्मिश्रयेत्ततः।
हिङ्गुना धूपिताः साम्ला हृद्याश्चक्कलिका वराः ॥ ४१ ॥

दध्ना विमिश्रयेच्चिञ्चां किंवा दाडिमसारकम्।
अथवामलकं पिष्टं मेलयेद्वाम्लवेतसम् ॥ ४२ ॥

रसं वा मातुलिङ्गस्य रसं दन्तशठस्य च।
मिश्रयेद्वा रसानेतान्द्वित्रान्वाऽपि यथारुचि ॥ ४३ ॥

गन्धार्थं धान्यकं हिङ्गु जीरकं तत्र निक्षिपेत्।
हरिद्रां चैव वर्णार्थं सुसूक्ष्मं च तथार्द्रकम् ॥ ४४ ॥

रुच्यर्थं विश्वमरिचं सैन्धवं च विनिक्षिपेत्।
गालयेत्सितवस्त्रेण किंचित्तैलं विमिश्रयेत् ॥ ४५ ॥

मृदः स्थाल्यां विनिक्षिप्य दर्वीघट्टनपूर्वकम्।
प्रलेहकं मृदावग्नौ पचेत्पाकविशारदः ॥ ४६ ॥

प्रक्षिप्य शुण्ठकांस्तत्र मृदु कुर्याच्च पाकतः।
भावितांश्च रसैः सर्वैः सिद्धानुत्तारयेद्बुधैः ॥ ४७ ॥

धूपयेद्धिङ्गुना वापि नखधूपेन वा पुनः।
धूपेन जीरकस्यापि शशिधूपेन कोविदः ॥ ४८ ॥

चणकस्य समान्खण्डान्कल्पयित्वा विचक्षणः।
निशाजीरकतीक्ष्णाद्यैः शुण्ठीधान्यकहिङ्गुभिः ॥ ४९ ॥

१ D पमा। २ D चक्क। ३ A वा क। ४ A लै। ५ C D चाजा। ६ A श्च ताः। ७ D वक्र। ८ D कैः। ९ A प्रहेलकं। १० F त्तु। ११ D त्ततः। १२ A ष्ठि।

चूर्णितैर्मेलयित्वा तांस्तप्ततैले[1] विनिक्षिपेत् ।
समानार्द्रकखण्डांश्च चणकान्हरितानपि ॥ १४५० ॥

श्लक्ष्णमांसैः क्षिपेत्कोलं निष्पावान्कोमलानपि ।
पलाण्डुशकलान्वाऽपि लशुनं वाऽपि निक्षिपेत् ॥ ५१ ॥

एवं पूर्वोदितं सूदः प्रयुञ्जीत यथारुचि ।
शोषितेऽम्लरसे पश्चात्सिद्धमुत्तार्य धूपयेत् ॥ ५२ ॥

बदराकारकान्खण्डान् पूर्ववच्चूर्णमिश्रितान् ।
आर्द्रकांस्तत्प्रमाणांश्च पक्वतैले विपाचयेत् ॥ ५३ ॥

वार्ताकशकलांश्चैव मूलकस्य च खण्डकान् ।
पलाण्ड्वार्द्रकसम्भूतान्मुद्रा(द्रा)ङ्कुरविनिर्मितान् ॥ ५४ ॥

वटकान्निक्षिपेत्तत्र मेषकस्य च चूर्णकम् ।
कासमर्देन संयुक्तं पलान्यन्यानि कानिचित् ॥ ५५ ॥

सुसिद्धं वासयेद्धूपैर्नानारसविमिश्रितम् ।
नानाद्रव्यैर्समेता सा कवचन्दी भवेच्छुभा ॥ ५६ ॥

स्थूलामलकसङ्काशान् शुद्धमांसस्य खण्डकान् ।
क्वाथयेद्राजिकातोयैर्नागरार्द्रकसंयुतैः ॥ ५७ ॥

आं(स्था)पयेत्तज्जलं [11]योटै(पात्रे)रिक्तैर(क्तैचा)म्लैर्विपाचयेत् ।
तत्समाञ्शुण्ठकान्क्षिप्त्वा सैन्धवं तत्र योजयेत् ॥ ५८ ॥

मेथी[12]कचूर्णकं तत्र धान्याकस्य च पूलिकाम् ।
निक्षिप्योत्तारयेत्सूदो घृते(तं) वान्यत्र तापयेत् ॥ ५९ ॥

सुतप्ते च घृते पश्चाल्लशुनं हिङ्गुना सह ।
प्रक्षिप्य संस्कृतं मांसं तस्यां स्थाल्यां प्रवेशयेत् ॥ १४६० ॥

पिहितं च ततः कुर्यात्किञ्चित्कालं प्रतीक्ष्य च ।
उत्तारयेत्ततः सिद्धं पुं[13]यलै[14]ख्यामिदं वरम् ॥ ६१ ॥

---

१ D तैलेन । २ A काल्कोव । ३ A ०ड । ४ A ला । ५ A एलाद्रा । ६ F न्सु । ७ D क्तः । ८ C व । ९ D समेपेता । १० D क्का थ । ११ D पे । १२ D वा A बा । १३ A यु । १४ F ख्या C ख ।

पृष्ठवंशसमुद्भूतं शुद्धं मांसं प्रगृह्यते ।
घनसार[1]प्रमाणानि कृत्वा खण्डानि मूलकैः[2] ॥ ६२ ॥

विध्वा तु बहुशस्तानि बहुरन्ध्राणि कारयेत् ।
हिङ्ग्वार्द्रकरसैर्युक्तं सैन्धवेन च पेषयेत् ॥ ६३ ॥

शूलप्रोतानि कृत्वा तान्यङ्गारेषु प्रतापयेत् ।
घृतेन सि[3]ञ्चेत्पाकज्ञैर्वा[4](ज्ञोवा)रंवारं विवर्तयेत् ॥ ६४ ॥

सिद्धेषु मारिचं चूर्णं विकिरेत्सैन्धवान्वितम् ।
नाम्ना भडित्रकं रुच्यं[5] लघु पथ्यं मनोहरम् ॥ ६५ ॥

अनेनैव प्रकारेण जर्जरीकृत्य[6] खण्डकान् ।
स्थाल्यामम्लेन संयोज्य पाचयेद्धिङ्गुनासह ॥ ६६ ॥

आर्द्रकस्य रसेनापि धान्यकस्य रसेन च ।
जीरकस्य च चूर्णेन मेथ(था)कस्य च मिश्रयेत् ॥ ६७ ॥

शोषयित्वा द्रवं सर्वं घृतेन परिव(भ)र्जयेत् ।
क्षिपेच्च मरिचं भृष्टे सूदो हर्ण्डभडित्रके ॥ ६८ ॥

मेषस्य कन्धरां छित्वा स्थाल्यां रक्तं विधारितम् ।
मर्दयेत्करशाखाभिर्निक्षिप्य लवणं मनाक् ॥ ६९ ॥

मृद्यमाने तु रुधिरे सिराजालैं[10]विनिःसृते ।
अपनीय तथा शुद्धं कीलालं पिहितं न्यसेत् ॥ १४७० ॥

क्रो[11]डदेशात्समारभ्य कर्त्रिकाग्रेण पाटिताम् ।
त्वचं विभज्य गात्रेभ्यो हरेद्बाह्यान्तरास्थिताम् ॥ ७१ ॥

पूर्वोद्दिष्टप्रदेशेषु स्थितं मांसमथाहरेत् ।
स्नायुग्रन्थिविनिर्मुक्तं खण्डशः परिकल्पयेत् ॥ ७२ ॥

पूगीफलप्रमाणानि कृत्वा खण्डानि पूर्ववत् ।
संस्कुर्यात्पूर्ववच्चूर्णैरम्लैश्च परिपाचयेत् ॥ ७३ ॥

१ A करपूर । २ D पू । ३ D सिञ्चयेत्पाकं । ४ A ज्ञोवा ? । ५ A द्रव्यं । ६ A त । ७ A सू । ८ A ण्ड । ९ A न्य । १० ले । ११ D ष्ट ।

स्तोकावशेषपाकेस्मिन्न्यस्तं रक्तं विनिक्षिपेत् ।
पूर्णे पाके समुत्तार्य धूपयेद्धिङ्गुजीरकैः ॥ ७४ ॥

कर्पूरचूर्णकं तस्मिन् एलाचूर्णेन संयुतम् ।
विकिरेन्मरिचैर्युक्तं कृष्णपाकमिदं वरम् ॥ ७५ ॥

अङ्गारभृष्टकं मांसं शुद्धे पट्टे निधापयेत् ।
कर्त्त(र्त)र्या तिलशः कृत्वा मातुलिङ्गस्य केसरैः ॥ ७६ ॥

आर्द्रकैः केसरालै(म्लै)श्च[2] गृञ्जनैस्तत्प्रमाणकैः ।
जीरकैर्मरिचैः पिष्टैर्हिङ्गुसैन्धवचूर्णकैः ॥ ७७ ॥

मिश्रयित्वा तु तन्मांसं हिङ्गुधूपेन वासयेत् ।
आमं मांसं च पेषण्यां हिङ्गुतोयेन सेचितम्[3] ॥ ७८ ॥

लवणेन च चूर्णेन संहितं पेषयेद्बुधः ।
पिष्टवच्चिक्कणं कृत्वा गोलकानि प्रकल्पयेत् ॥ ७९ ॥

चूर्णीकृतं तु यन्मासं गोलकैस्तद्विवेष्टयेत् ।
चूर्णगर्भांश्च वटकान्प्रक्षिपेदाणके शुभे ॥ १४८० ॥

ख्यातास्ते मांसवटका रुच्या दृश्या मनोहराः ।
त एव वटकास्तैले पक्वाः स्युर्भूषिकोंभिधाः ॥ ८१ ॥

तदेव चूर्णितं मांसं कणिकापरिवेष्टितम् ।
अङ्गारेषु तथा भृष्टं कोशलीति निगद्यते ॥ ८२ ॥

वार्ताकं वृन्तदेशस्य समीपे कृतरन्ध्रकम् ।
निष्कासितेषु बीजेषु तेर्नै मांसेन पूरितम् ॥ ८३ ॥

तैलेन पाचितं किंश्चिदाणके परिपाचयेत् ।
पूरभट्टाँकसंज्ञं तत्स्वादुना परिपाचयेत् ॥ ८४ ॥

कोशातकीफलेऽप्येवं मूलकस्य च कन्दके ।
पूरिते चूर्णमांसेन तत्तन्नाम्ना तु कथ्यते ॥ ८५ ॥

१ A र्ण । २ A म । ३ A सिंचि । ४ A सेचितं । ५ A ता । ६ D ऐण । ७ F भ्रटाक D ष्टा ।

आमं मांसं सुपिष्टं तु केसरादि[1]विमिश्रितम् ।
वटकीकृत्य तैलेन तप्तेन परिपाचयेत् ॥ ८६ ॥

आणके च[2] क्षिपेत्तज्ज्ञस्तापयेद्वा विभावसौ ।
ना[3]म्ना वट्टिमकं तत्तु त्रिः (त्रि) प्रकारमुदीरितम् ॥ ८७ ॥

अ[4]न्त्राणि खण्डशः कृत्वा कालखण्डं तथा कृतम् ।
वारिप्रक्षालितं कृत्वा खण्डितांः (तान्) समरूपतः ॥ ८८ ॥

मेदसः शकलास्तद्वन्मांसखण्डास्तथैव च ।
राजिकाकल्कदिग्धांस्तांस्तोयमिश्रान्विपाचयेत् ॥ ८९ ॥

आर्द्रकस्य रसं स्तोकं अम्लमल्पं विमिश्रयेत् ।
प्रमाणाल्लवणं क्षिप्त्वा हिङ्गुतोयं च मेलयेत् ॥ १४९० ॥

किञ्चिच्छेषं द्रवं तत्तु समुत्तार्य विधूपयेत् ।
पञ्चवर्णीति विख्याता नानारूपरसावहा ॥ ९१ ॥

अन्त्राणि जलधौतानि शूलयष्ट्यां विवे[6]ष्टयेत् ।
तापयेच्च तथाऽङ्गारैर्यावत्काठिनतां ययुः ॥ ९२ ॥

पश्चाद्विचूर्णितं श्लक्ष्णं सैन्धवं तेषु योजयेत् ।
अन्त्रशुण्ठकमाख्यातं चर्वणे मर्मरारवम् ॥ ९३ ॥

पूर्ववच्छोषिते रक्ते बीजपूरस्य केसरम् ।
रसमार्द्रकसंभूतं रसं दन्तशठस्य च ॥ ९४ ॥

जीरकं हिङ्गुमरिचं धान्यकं सैन्धवं क्षिपेत् ।
मेदसः श्लक्ष्णखण्डानि क्षिप्त्वा सर्वं विलोडयेत् ॥ ९५ ॥

अन्त्रं प्रक्षालितं यत्नात्तेन रक्तेन पूरितम् ।
[8]पेटकाकृतियुक्तासु कम्रासु परिवेष्टयेत् ॥ ९६ ॥

कम्रामुखानि बध्नीयात् केवलैरन्त्रकैस्तथा ।
तैरेव र[10]ज्जुसङ्काशैर्गृहीत्वोपरि तापयेत् ॥ ९७ ॥

१ D निर्मि । २ D चाक्षि । ३ D सास्ना पट्टकमम् । ४ A आ । ५ D ता । ६ A पाच ।
७ A जि । ८ A प । ९ A कैःसमा D कैस्ततः । १० A स ।

अङ्गारैः किंशुकाकारैर्यावत्काठिन्यमाप्नुयुः।
मण्डलीयं समाख्याता राजवृक्षफलोपमा ॥ ९८ ॥

पश्चाङ्गपट्टवेष्टय[2] वर्तिबद्धोज्ज्वला वपा।
अङ्गुलद्वयमानेन खण्डांस्तस्याः प्रकल्पयेत् ॥ ९९ ॥

खण्डानि कालखण्डस्य तत्प्रमाणानि चान्तरा।
शूलप्रोतानि कृत्वा तान्यङ्गारेषु प्रतापयेत् ॥ १५०० ॥

सैन्धवं विकिरेत्तत्र सुश्लक्ष्णं मरिचान्वितम्।
वर्णशुण्ठकनामेदं वर्णितं सोमभूभुजा ॥ १ ॥

अङ्गारेषु तथा भृष्ट्वा कालखण्डं विकृत्य च।
पूगीफलप्रमाणेन खण्डान्कृत्वा विचक्षणः ॥ २ ॥

तैलेनाभ्यज्य तान्सर्वान्मरिचाजाजिसैन्धवैः।
चूर्णितैर्विकिरेत्पश्चाद्धिङ्गुधूपेन धूपयेत् ॥ ३ ॥

अनेन विधिना भृष्ट्वा[3] राजिकाकल्पलेपितम्[4] ( तान् )।
कालखण्डान्प्रकुर्वीत दध्ना राजिकयाऽथवा ॥ ४ ॥

भृष्टस्य कालखण्डस्य कृत्वा चंक(क)लिकाः शुभाः।
केसरैर्मातुलिङ्गस्य सैन्धवाद्यैश्च मिश्रयेत् ॥ ५ ॥

समेदस्कौ द्विधा भक्तौ कृत्वा लवणमिश्रितौ।
आम्लकैर्भावयित्वा तौ[6] तैलेन परिपाचयेत् ॥ ६ ॥

क्रोडदेशोद्भवं मांसमंसस्था सह विखण्डितम्।
अंसकीकससंयुक्तं पार्श्वकुल्या समन्वितम् ॥ ७ ॥

मृद्भाण्डे स्थाल्य(ल)वक्त्रे तन्निक्षिप्य बहलोदके।
हिङ्गुना चार्द्रकेणापि सैन्धवेन च संयुतम् ॥ ८ ॥

क्राथयेत्सुचिरं कालं यावत्तन्मार्दवं भजेत्।
उत्क्वाथितमिदं[11] सूपं ख्यातं शास्त्रविशारदैः ॥ ९ ॥

---

१ A मा: । २ D ष्ट्य च । ३ C ष्टा । ४ D ताः C ताम् । ५ D त्र F च । ६ A कस । ७ D कौ । ८ D तु । ९ C सक्ता A सस्त्वा । १० A त्क्वाथित । ११ D ख्यातं सूपशास्त्रविशारदैः ।

विशस्तस्य च मेषस्य जठरं पाटयेद्नु।
आन्तरं सर्वमुत्सार्य बध्नीयादपराङ्घ्रिकौ ॥ १५१० ॥

शिरश्च रज्वा दृढया ज्वालायां परितापयेत्।
यावद्रोमाणि गच्छन्ति यावत्कृष्णत्वमेति च ॥ ११ ॥

ततः प्रक्षाल्य तोयेन शेषं क्रोडवदाचरेत्।
अन्येषां श्वापदानां च शेषं मेषवदाचरेत् ॥ १२ ॥

समेदस्कानि मांसानि कृत्वा दीर्घाणि कर्तनैः।
हिङ्गुतोयेन संसिच्य लवणेन विलोडयेत् ॥ १३ ॥

छायायां तानि खण्डानि वास्तु(यु)ना परिशोषयेत्।
एकद्वित्रिदिनान्तेषु भृष्टान्यङ्गारपुञ्जके ॥ १४ ॥

स्थूलीकृतानि यावच्च स्वादुरुच्यानि यन्नृणाम्।
उपष(ख)ण्डकनामानि सर्वशाकोत्तमानि च ॥ १५ ॥

हरिणस्य तथा खण्डान् चक्कुलीपरिकल्पितान्।
सम्भारसहितान्प्राज्यलवणेन विमिश्रितान् ॥ १६ ॥

शोषितानपि चात्यर्थमग्निना परिभर्जितान्।
हृद्यान्यथा(पथ्या)न्सुगन्धांश्च कल्पयेदुपखण्डकान् ॥ १७ ॥

रुरुशम्बरसारङ्गछागस्य नलकं पृथु।
अग्नौ भृष्ट्वा शिलाघातैः स्फोटयित्वा प्रयत्नतः ॥ १८ ॥

मज्जानं तु ततो हृत्वा लवणाम्लेन हिङ्गुना।
मरिचाजाजिचूर्णेन पचेत्स्थाल्यां विचक्षणः ॥ १९ ॥

यस्य कस्यापि मेषादेः शिरो भृष्ट्वा विभिद्य च।
आददीत च मस्तिष्कं काञ्जिकेन विपाचयेत् ॥ १५२० ॥

आणके तैलमध्ये वा यथारुचि पुनः पचेत्।
चूर्णैः संयोज्य तत्पश्चाद्धिङ्गुधूपेन धूपयेत् ॥ २१ ॥

पक्षिणामपि सर्वेषां पिच्छानुत्सार्य सर्वतः।
चञ्चुपादं पृथक्कृत्वा पाटयित्वा ततो(थो)दरम् ॥ २२ ॥

१ D वित्तलस्य। २ A खातृ। ३ A ञ्च्वा। ४ F पथा। ५ A स्फे।

निष्कृष्यान्त्रादिकं सर्वं पूर्ववत्परिपाचयेत् ।
यथा सूकरमेषाणां क्रियाः प्रोक्ता विपाचने ॥ २३ ॥

सशल्कानां च मत्स्यानां शल्कं स्फे(स्फो)ट्यं प्रयत्नतः ।
स्थूलाश्चेत्खण्डशः कार्या लघवश्चेत्सरूपतः ॥ २४ ॥

मत्स्यानां छेदयेत्शीर्षं पुच्छं तेषां च पक्षिणाम् ।
विपाट्य जठरं तस्मादन्त्रकाण्यपसारयेत् ॥ २५ ॥

कद्दांकरोष्ट बडिशा दग्धा खवल चाचुकैः? ।
पाठीनैश्च तथैतेषां पृथक् कृत्वा शिरः पचेत्? ॥ २६ ॥

मत्स्यानां घर्षणं कार्यं तैलेन लवणेन च ।
यावत्पिच्छलतां याति मत्स्यगन्धश्च नश्यति ॥ २७ ॥

क्षालयेदुदकैः पश्चाद्धरिद्राकल्कमिश्रितैः ।
वस्त्रे बध्वा निपीडयैतान् स्रावयेत्सङ्गतं जलम् ॥ २८ ॥

क्षिपेत्पूर्वप्रसिद्धेषु प्रपक्केष्वाणकेषु तान् ।
स्वल्पे काले गते सूदः स्थालीमुत्तार्य धूपयेत् ॥ २९ ॥

मत्स्यखण्डानि धौतानि चिञ्चाम्लेन विपाचयेत् ।
ततो गोधूमचूर्णं तु विकिरेत्तेषु सर्वतः ॥ १५३० ॥

तप्ततैले क्षिपेत्तानि पिङ्गान्युत्तारयेत्ततः ।
एलामरिचचूर्णेन सैन्धवेन च भावयेत् ॥ ३१ ॥

आणके वा तथा तैले वह्नौ वा धूमवर्जिते ।
पूर्वोक्तविधिना मत्स्यान् यथारुचि विपाचयेत् ॥ ३२ ॥

मत्स्यांश्च खण्डशः कृत्वा चतुरङ्गुलसम्मितान् ।
लवणेन समायुक्तान् कुम्भेषु परिपूरयेत् ॥ ३३ ॥

खारखण्डा इति ख्याताश्चिरकालं वसन्ति ते ।
भोजनावसरे सूदो वह्निना परिभर्जयेत् ॥ ३४ ॥

मत्स्याण्डकोशावादाय वन्हिना परिभर्जयेत् ।
दृढीभूते(तौ) ततः पश्चात् खण्डशः परिकल्पयेत् ॥ ३५ ॥

१ A ल्वा। २ A ध्या। ३ A दा। ४ D कन्दं करोष्ट बिडिशाः। ५ A ठा। ६ C F खी। ७ D र्स।

विपच्य तप्ततैले तान्येलामरिचकादिभिः ।
विकीर्य सैन्धवेनापि हिङ्गुना परिधूपयेत् ॥ ३६ ॥

कच्छपान् वह्निना भृष्ट्वा पादांश्छल्कांश्च मोचयेत् ।
शिरश्चैव पृथक्कृत्वा पक्वरम्भाफलोपमान् ॥ ३७ ॥

अम्लकैश्च विपच्याथ तैलेनाज्येन वा पुनः ।
पाचयेच्च सुसिद्धांस्तान् चूर्णकैर[1]वचूर्णयेत् ॥ ३८ ॥

आणके वा पचेत्तज्ज्ञो निर्धूमे वा हुताशने ।
नन्द्यावर्ता इति ख्याता मृदुरुच्या मनोहराः ॥ ३९ ॥

कर्कटांस्तु लघून्स्थूलान् हस्तपादवियोजितान् ।
रूक्षे ताम्रमये पात्रे सुतप्ते तान्वि(भ)वर्जयेत् ॥ १५४० ॥

स्फोटिते खर्परे तांस्तु मृदो[2] भाण्डे विनिक्षिपेत् ।
विपचेल्लवणाम्लैश्च पुनः सर्पिषि पाचयेत् ॥ ४१ ॥

जीरकं लवणं तीक्ष्णं चूर्णितं तेषु[3] निक्षिपेत् ।
वृष्या[4] बलकरा हृद्या मृष्टास्ते घृतकर्कटाः ॥ ४२ ॥

मूख(ष)काः क्षेत्रसंभूता नदीकूलेषु संस्थिताः ।
स्थूलाः श्यामास्तथा पुष्टा जात्या ते मयिगाः स्मृताः ॥ ४३ ॥

प्रतप्ते सलिले तांस्तु निक्षिपेत्पुच्छधारणात् ।
उद्धृत्य तस्मात्सलिलाद्रोमाण्युत्पाटयेत्ततः ॥ ४४ ॥

विभेद्य जठरं तेषां स्फोटयेदन्त्रकाणि तु ।
सम्भारसहितैरम्लैः पचेच्च लवणान्वितैः ॥ ४५ ॥

शूलप्रोतांस्ततः कृत्वा तानङ्गारैः प्रतापयेत् ।
यावद्बहिस्त्वचस्तेषां शोषमायान्ति तापनात् ॥ ४६ ॥

सुपक्वेषु तथा तेषु मूख(ष)केषु किरेदनु ।
लवणं मरिचं शुण्ठी जीरकं च विचूर्णितम् ॥ ४७ ॥

फलशाकं पत्रशाकं[6] कन्दशाकं[6] च मूलकम् ।
पुष्पशाकं[6] शिम्बिशाकं[6] पक्वापक्वविभेदतः ॥ ४८ ॥

१ A रेव । २ A दौ । ३ D तेषु वि । ४ A ष्या । ५ D णः । ६ A खं ।

कल्पयेद्विविधैः शाकै[1]र्मांसवत् पाककोविदः ।
वटकान् पर्पटान् हृद्यानङ्गारैः परिभर्जयेत् ॥ ४९ ॥

आम्राम्रातकजम्बूश्च वीजपूराग्निमन्थकैः ।
भल्लातागस्त्यका[2]र्पासद्राक्षाभृङ्गकसल्लकैः ॥ ५० ॥

पुनर्नवा मरी तीक्ष्णा अ[3]तसी सुरसाद्वयम् ।
मरुकं तालपर्णी च भिण्डुकी मुण्ड[4]का तथा ॥ ५१ ॥

ब्राह्मी चैवाम्लपत्री च कोकिलाक्षी कुसुम्भकम् ।
अञ्जनं पद्मकोशश्च शेढकं च तथापरं ॥ ५२ ॥

सङ्गृह्य पल्लवानेषाम[5]म्ल(म्लि)काम्लेन मिश्रयेत् ।
जम्बीराम्लेन दध्ना वा लवणेन च संयुतान् ॥ ५३ ॥

श्रीफलं केतकं चिञ्चा मेषशृङ्गी सुगन्धिजम् ।
कुटजं मरिचं पथ्या विषमुष्टिकशिम्बिजम् ॥ ५४ ॥

एलारामठनीवारमेथिकापर्पटं तथा ।
अगस्त्यं नन्दनं राजमातुलिङ्गकपाटलि[6] ॥ ५५ ॥

कटं मटं कर्कटं च करीरं टेण्टुकं तथा ।
वेत्रकारीफलं चैव लवणाम्भसि निक्षिपेत् ॥ ५६ ॥

चूतमाम्रातकं धात्री कुँ[7]हिरी कर्कटी तथा ।
कूष्माण्डं त्रपुसं द्राक्षा कर्कटी बृहतीद्वयम् ॥ ५७ ॥

कोशातकीबीजपूरं निष्पावं करम[8]र्दकम् ।
जम्बीरबिम्बवार्ताककर्मरं लवणाम्भसि ॥ ५८ ॥

अथवा राजिकाचूर्णे सतैले लवणान्विते ।
प्रक्षाल्य वृन्तसहितं[10] फलं चूतादिकं न्यसेत् ॥ ५९ ॥

कारवेल्लं सपनसं कदलीफलमेव च ।
सतैले राजिकाचूर्णे निक्षिपेल्लवणान्विते ॥ १५६० ॥

१ A खै। २ A क। ३ D ऋ। ४ D F C ण्डि। ५ D म्मालिका। ६ D लिः। ७ D कू गी। ८ A ति। ९ A वन्दरं। १० C ते, F तें।

वंशाङ्कुरं लघुं चैक्रीं शताव[1]र्यास्तथैव च।
पाता[2]लटेण्टु[3]कानां च प्ररोहान्क्षालितान्मृदून्॥ ६१॥

सलिले लवणोपेते तैले वाऽपि सराजिके।
लवणेन समायुक्ते प्रक्षिपेदङ्कुरानिमान्॥ ६२॥

मागिणीमार्द्रकं पे[4]ष्टुं कचोरं वनमागिणीम्।
कर्पूरमागिणीमूलं तथैवाम्लहरिद्रका॥ ६३॥

सूरणं मधुशिग्रुं च तथा शै[6]वलकन्दकम्।
एतानि पूर्ववत्कृत्वा तैले वापि विनिक्षिपेत्॥ ६४॥

गव्यं वा माहिषं वाऽपि क्षीरं नीरविवर्जितम्।
पचेत्स्थाल्यां मृदावग्नौ दर्वीघट्टनसंयुतम्॥ ६५॥

अँर्धावशेषं कुर्वीत त्रिभागेनावशेषितम्।
षड्भागशेषितं वाऽपि कुर्यादष्टावशेषिकम्॥ ६६॥

अँर्धावशिष्टं पाने स्यात्त्रिभागं लेह्यकं भवेत्।
षड्भागं पिण्डतामेति शर्करा स्यादथाष्टमे॥ ६७॥

अ[11]र्धावशेषिते दुग्धे तक्रमीषद् विनिक्षिपेत्।
नवस्थाल्यां न्यसेत्त[12]त्तु निवाते स्थापयेच्च तां[13]म्॥ ६८॥

शर्करामिश्रितं वापि फ[14]लैर्वापि विमिश्रयेत्।
यामषट्कोषितं क्षीरमम्लतां घनतां भजेत्॥ ६९॥

दधीति नाम प्राप्नोति पथ्यं मृष्टं मनोहरम्।
हीनकाले तथा पथ्यं चिरकालेऽम्लता बहु॥ १५७०॥

मन्थानेन मथित्वा तन्नवनीतमथो ह[15]रेत्।
निर्जलं मथितं प्रोक्तमुदस्वित्यॉ[16] (श्चिच) जलार्ध[17]कम्॥ ७१॥

पादाम्बु तक्रमुद्दिष्टं धूपितं हिङ्गुजीरकैः।
आर्द्रकेण समायुक्तमेलासैन्धवचूर्णितम्॥ ७२॥

---

१ D व। २ D तालं ३ A तलं आर्द्रा। ३ A ण्ड। ४ F ये। ५ D रो। ६ D वष्ठ। ७ A आर्द्रा। ८ A ष। ९ A आर्द्रा। १० A ष्ट। ११ A आर्द्रा। १२ D तन्तु। १३ D तम्। १४ F क। १५ D द्ध। १६ A त्यार्द्ध। १७ A द्धिं।

मथितं शर्करायुक्तमेलाचूर्णविमिश्रितम् ।
कर्पूरधूपितं नाम्ना मज्जिकेत्यभिधीयते ॥ ७३ ॥

निष्पीड्य दधि वस्त्रेण स्रावयेत्तद्भुतं जलम् ।
शर्करैलासमायुक्ता सूदैः शिखरिणी मता ॥ ७४ ॥

स्रावितं यद्धृतं तोयं जीरकार्द्रकसैन्धवैः ।
संयुक्तं हिङ्गुधूपेन धूपितं मस्तु कीर्तितम् ॥ ७५ ॥

नवनीतं नवं धौतं नीरलेशविवर्जितम् ।
तापयेदग्निना सम्यक् मृदुना घृतभाण्डके ॥ ७६ ॥

पाके संपूर्णतां याते क्षिपेद्गोधूमबीजकम् ।
क्षिपेत्ताम्बूलपत्रं च पश्चादुत्तारयेद्धृतम् ॥ ७७ ॥

तण्डुलक्षालितं तोयं चिञ्चाम्लेन विमिश्रितम् ।
ईषत्तक्रेण संयुक्तं सितया सह योजितम् ॥ ७८ ॥

एलाचूर्णसमायुक्तमार्द्रकस्य रसेन च ।
धूपितं हिङ्गुना सम्यक् व्यञ्जनं परिकीर्तितम् ॥ ७९ ॥

सौवीरनिर्मलं साम्लं लवणेन च संयुतम् ।
हिङ्गुना जीरकेणापि धूपितं धूपकाञ्जिकम् ॥ १५८० ॥

शङ्कुद्वयं समास्थाप्य बध्नीयादुज्ज्वलाम्बरम् ।
प्रसार्य प(य)ष्टिभिः किञ्चित्क्षीरमम्लेन भेदितम् ॥ ८१ ॥

सितया च समायुक्तमेलाचूर्णविमिश्रितम् ।
क्षिपेत्प्रसारिते वस्त्रे स्रावयेत्पेषयेत्समम् ॥ ८२ ॥

पुनः पुनः क्षिपेत्तत्र यावन्निर्मलतां व्रजेत् ।
पक्वचिञ्चाफलं भृष्टं वर्णार्थं तत्र निक्षिपेत् ॥ ८३ ॥

यस्य कस्य फलस्यापि रसेन परिमिश्रयेत् ।
तत्तन्नामसमाख्यातं पानकं पेयमुत्तमम् ॥ ८४ ॥

सौवर्णे राजते पात्रे रीतिर्यन्त्रविधारिते ।
भोजयेन्मण्डलेशादीन्यथायोग्यप्रदेशतः ॥ ८५ ॥

१ D आवपे । २ A त । ३ A मधु । ४ A य । ५ A तः । ६ D F श्रितम् । ७ D पान । ८ F अंत ।

विशाले काञ्चने पात्रे स्वर्णकच्चोल[1]संयुते ।
लोहगङ्गालकैर्युक्ते रुक्मपिंगालकैर्वृते ॥ ८६ ॥

भ्र[2]मशुक्तिसमोपेते कनकस्थाल[3]संयुते ।
जलप्रक्षालिते सम्यक् सितवस्त्र[4]प्रमार्जिते ॥ ८७ ॥

वर्धयेत्पूर्वकथितमन्नपक्वान्न[5]पानकम् ।
ऊरुनाभिप्रदेशान्तं सञ्छाद्य सितवाससा ॥ ८८ ॥

गद्दिकायां समासीनः पूर्वाशासम्मुखो नृपः ।
अ[6]न्नं मुद्गसमोपेतं भुञ्जीतोष्णं घृतप्लुतम् ॥ ८९ ॥

प्राचीमुखस्तु भुञ्जान आयुश्च लभते बहु ।
यशश्च लभतेऽत्यर्थमश्नन्दक्षिणदिङ्मुखः ॥ १५९० ॥

श्रियं तु लभते पुष्टां भुञ्जानः पश्चिमाननः ।
सत्यवाक्यफलं प्राप्नोत्यश्नन् धनददिङ्मुखः ॥ ९१ ॥

श्लक्ष्णमांससमायुक्तं विदलैर्वा विमिश्रितम् ।
लेह्यै[7]श्च विविधैर्हृद्यैर्लेपितं वा तथोदनम् ॥ ९२ ॥

मांसप्रकारकैर्मृष्टैरम्लमिश्रैश्च च पल्लवैः ।
नानाविधैस्तथा शाकैः फलपत्रसमुद्भवैः ॥ ९३ ॥

वटकैः पर्पटैर्हृद्यैः खारखण्डो[8]पखण्डकैः ।
यथारुचि यथासात्म्यं सुखं भुञ्जीत भूपतिः ॥ ९४ ॥

पक्वान्नं पायसं मध्ये शर्कराघृतमिश्रितम् ।
ततः फलानि भुञ्जीत मधुराम्लरसानि च ॥ ९५ ॥

पिबेच्च पानकं हृद्यं लिह्याच्छिखरिणीमपि ।
चूषेत मज्जिकां पश्चाद्दधि चा[9]म्ला(?)ऽत्ततो घनम् ॥ ९६ ॥

ततस्तक्रा[10]न्नमश्नीयात् सैन्धवेन च संयुतम् ।
क्षीरं वाऽपि पिबेत्पश्चात् पिबेद्वा काञ्जिकं व[11]रम् ॥ ९७ ॥

---

१ A C F म्बो । २ भ्रुम । ३ A सङ्गते । ४ D स्त्रेण । ५ A म्र F म्ल । ६ A न्न । ७ D प्रलेहैर्वि । ८ A ण्डेप । ९ A वा । १० A न्त । ११ A वरी ।

मांसमम्लेन भुञ्जीत दुग्धं वा[1] शर्करायुतम् ।
लवणेन तथा चाम्लं क्षारं कटुकषायकैः ॥ ९८ ॥

वसन्ते कटु चाश्नीयाद्ग्रीष्मे मधुरशीतलम् ।
वर्षासु च तथा क्षारं मधुरं शरदि स्मृतम् ॥ ९९ ॥

हेमन्ते स्निग्धमुष्णं च शिशिरेऽप्युष्णमम्लकम् ।
एवं भुञ्जीत यद्रूपो अन्नभोगः स कथ्यते ॥ १६०० ॥

अन्नभोगः समाख्यातः सोमेश्वरमहीभुजा ।

॥ इत्यन्नभोगः ॥ १३ ॥

हृद्यः पानीयभोगोऽयमिदानीमभिधीयते ॥ १ ॥

मध्ये मध्ये पिबेद्वारि स्तोकं स्तोकं सुशीतलम् ।
भोजनस्य च रुच्यर्थं पाकार्थमशनस्य च ॥ २ ॥

पिपासायां च जातायां स्वेच्छया पीयते जलम् ।
नियमो नात्र कालस्य तृषावेगो न धार्यते ॥ ३ ॥

असवः प्राणिनामापो जीवितं यत्तदाश्रितम् ।
मूर्च्छिता अपि जीवन्ति यतस्तोयेन सिञ्चिताः ॥ ४ ॥

दिव्य(व्या)न्तरिक्षं नादेयं नैर्झरं सारसं जलम् ।
भौमं चौण्डं[2] च ताडाकमौद्भिदं[3] नवमं स्मृतम् ॥ ५ ॥

स्वात्यां पयोदनिर्मुक्तं सूर्यरश्मिविमिश्रितम् ।
सर्वदोषापहं स्वादु दिव्यमित्युच्यते जलम् ॥ ६ ॥

प्रावृड्जलदनिर्मुक्तमव्यक्तं स्वादुलक्षणम्[4] ।
वारि स्फटिकसङ्काशमान्तरिक्षमिति स्मृतम् ॥ ७ ॥

नद्यां शैलप्रसूतायामिन्द्रनीलसमप्रभम् ।
प्रशस्तभूमिभागस्थं नीरं नादेयमुच्यते ॥ ८ ॥

---

१ D F शर्करया सह । २ D ण्डं F ढं । ३ A ढाक F डाग । ४ A तज्जलम् ।

वालुकासु करैर्गर्तं कृत्वा यत्प्राप्यते जलम् ।
उत्क्षेपणेन नैर्मल्यं याति निष्प(ष्य)न्दजं हि तत् ॥ ९ ॥

नद्याः शैलवराद्वाऽपि स्रुतमेकत्र संस्थितम् ।
कुमुदाम्भोजसञ्छन्नं तोयं सारसमुच्यते ॥ १६१० ॥

वापीकूपसमुत्पन्नं नीलोत्पलदलप्रभम् ।
विमलं मधुरास्वादं भौममम्भोऽभिधीयते ॥ ११ ॥

स्वयं दीर्घशिलाश्वभ्रेष्वतसीपुष्पसन्निभम् ।
निर्मलं मधुरं पथ्यं सलिलं चौण्डमुच्यते ॥ १२ ॥

पालिबन्धेन संरुद्ध(द्धः)कुल्यापूरागतो रसः ।
प्रतिवर्षं वना(नवा)म्भोभिमि(र्मि)श्रस्ताडाक उच्यते ॥ १३ ॥

निर्मलं लघु पानीयमुत्तानं स्वादु शीतलम् ।
शैलसानुसमुद्भेदान्नैर्झरं परिकीर्तितम् ॥ १४ ॥

दशमं केचिदिच्छन्ति वार्क्षं जीवनमुत्तमम् ।
नारिकेलसमुद्भूतं स्वादु वृष्यं मनोहरम् ॥ १५ ॥

हंसोदकं तथा चान्यत् क्रियासंस्कारसंस्कृतम् ।
दिवा सूर्यांशुसन्तप्तं रात्रौ चन्द्रांशुशीतलम् ॥ १६ ॥

सकर्दमं सशैवालं पल्वलोत्थं सपल्लवम् ।
वर्जयेदूषरोद्भूतं गन्धवर्णैश्च दूषितम् ॥ १७ ॥

अशोकपल्लवप्रख्यं शुद्धस्फटिकसन्निभम् ।
नीलोत्पलदलश्यामं कषायमधुरं वरम् ॥ १८ ॥

कणामुस्तकसंयुक्तमेलोशीरकचन्दनैः ।
मर्दितं मृत्तिकापिण्डं खदिराङ्गारपाचितम् ॥ १९ ॥

निक्षिपेन्निर्मले तोये सर्वदोषहरे शुभे ।
कथितः पिण्डवासोऽयं सलिलेषु विचक्षणैः ॥ १६२० ॥

१ A क्षे। २ A ष्क। ३ D भ्रेर। ४ C F ढ। ५ A प्रतिबन्धेन यत्तोयं तत्ताडागं समुच्यते।
६ D च्यते। ७ C क्षं। ८ D मृदि।

सहकाररसेनापि पाटलोत्पलचम्पकैः ।
वा[1]सयेच्च यथाकालं पुष्पवासोऽयमीरितः ॥ २१ ॥

लवङ्गोशीरकर्पूरकान्तानलदचन्दनैः ।
सलिलामयक[2]ङ्कोलपथ्याकर्चूरसंयुतैः ॥ २२ ॥

विचूर्णितैः समैरेभिः सुशीतामलवारिणा[3] ।
चूर्णाधि[4]वासिनः प्राह श्रीम[5]त्सोमेश्वरो नृपः ॥ २३ ॥

करकैर्मृण्मयैः श्लक्ष्णैः प्रवालारुणकान्तिभिः ।
चर्मपात्रैः सुर[6]म्यैर्वा त्रिफलो(ला)परिशोधितैः ॥ २४ ॥

नालैश्च सुबहुच्छिद्रैः रौप्यस्फ[7]टिककाञ्चनैः ।
सहितैस्तैः शुभकरैः सितवस्त्रावगुण्ठितैः ॥ २५ ॥

भृतं सुशीतलं तोयं निर्मलं मृदु [8]वीजितम् ।
पिबे[9]त्सौ[10]वर्णचषकैः शुक्तिभिर्वा विसैरपि ॥ २६ ॥

दिव्यं शरदि पानीयं हेमन्ते सरिदुद्भवम् ।
शिशिरे वारि ताडागं वसन्ते सारसं पयः ॥ २७ ॥

निदाघे[11] नैर्झरं तोयं भौमं प्रावृषि पीयते ।
हंसोदकं स[12]दा पथ्यं वार्षं पेयं यथारुचि ॥ २८ ॥

सहजं निर्मलं वाऽपि संस्कृतं गन्धवासनैः ।
पीयते सलिलं यत्तु पानभोगः स की[13]र्तितः ॥ २९ ॥

॥ इति पानीयभोगः ॥१४॥

प्रोक्तः पानीयभोगोऽयं सोमेश्वरमहीभुजा ।
पादाभ्यङ्गोपभोगोऽयमधुना परिकीर्त्यते ॥ १६३० ॥

वामपार्श्वे शयानः सन्पादावभ्यञ्जयेत्सुखी ।
सर्पिषा शतधौतेन नवनीतेन वा नृपः ॥ ३१ ॥

दध्ना तैलेन पयसा तक्रेणापि[14] युतेन वा ।
श्रीखण्डक्षोदनीरेण बदर्याः फेनकेन वा ॥ ३२ ॥

१ A व । २ A कांक्का । ३ A णः । ४ A नि । ५ C मान् । ६ D न्यै । ७ D F स्फा । ८ A जीवि । ९ A व । १० F त्सु । ११ A घैर्नि । १२ A तथा । १३ A र्त्यते । १४ F भि ।

पादसंवाहदक्षाणां कामिनीनां मनोहरैः।
अशोकपल्लवप्रख्यै[1]र्हस्तैरत्यन्तपेशलैः ॥ ३३ ॥

वसन्ते स[2]र्पिषा दध्ना शीतेन पयसाऽपि वा।
निदाघे नवनीतेन काञ्जिकेन[3] सफेनकैः ॥ ३४ ॥

वर्षासु वसयाभ्यङ्ग्यौ[4] पादौ तक्रेण वा पुनः।
शतधौतेन शरदि सर्पिषा चन्दनोदकैः ॥ ३५ ॥

हेमन्ते शिशिरे चैव तैलेनाभ्यञ्जयेत्पदे।
पश्चात्प्रक्षालयेत्पादौ सुखस्पर्शेन पाय(थ)सा ॥ ३६ ॥

मसूरयवपिष्टैश्च हरिद्राचूर्णमिश्रितैः।
उद्धृ(द्वृ)त्य च पुनः पादौ क्षालयेत्सुखवारिणा ॥ ३७ ॥

एवं यः कारयेद्राजा भोजनादूर्ध्वमन्वहम्।
पादाभ्यङ्गोपभोगोऽयं वर्णितः सोमभूभुजा ॥ ३८ ॥

इति पादाभ्यङ्गोपभोगः ॥ १९ ॥

इदानीं सुखदोऽत्यर्थं यानभोगो निरूप्यते।
दोला सुखासनं हस्ती करिण्यश्वतरी हयः ॥ ३९ ॥

रथो नौः प्लवक[6]श्चेति नवधा यानमुच्यते।
सुवक्रया वेणुजया हेमरत्ननिबद्धया ॥ १६४० ॥

स्वर्णशृङ्खलवत्पट्टन्यस्तशय्योपधानया।
दिव्यपट्टप्रच्छदया वीवँधद्वयबा(वा)ह्यया ॥ ४१ ॥

एकदण्डिकया यानं दोलायानं तदुच्यते।
दन्तिदन्तविनिर्माणं हेमरत्नविभूषितम् ॥ ४२ ॥

शार्दूलचर्मसन्नद्धं दण्डिकाद्वयधारि च।
चतुर्भिर्विविधैर्बा(र्वीवधैर्वा)ह्यं हंसशय्यासमन्वितम् ॥ ४३ ॥

पृथ्व्याधारेण संयुक्तं सुखासनमिति स्मृतम्।
समग्रं विपुलस्कन्धं मृदुसञ्चारसंयुतम् ॥ ४४ ॥

---

१ C D F स्तलैरभ्यञ्जयेच्छनैः। २ A सा। ३ C F काञ्जिकैः परिकीर्तितः D काञ्जिकैः कोल।
४ A ङ्गौ। ५ D निर्णी। ६ A का। ७ D विवि। ८ A श्वी।

जवने त्वरितं नागं याने शंसन्ति कोविदाः ।
सौवर्णस्तम्भयुक्तेन मुक्तादामविराजिना ॥ ४५ ॥
काञ्चनैः कलशैः श्लक्ष्णैरुपरिष्टाद्विराजिना ।
मयूरपिच्छपुच्छैर्वा प्रच्छन्नेन सुशोभिना ॥ ४६ ॥
[1]चारुचामीकरच्छन्नपुष्पकेणोपशोभिता ।
करिणी लघुसञ्चारा वेशदेश(शे) त्वकम्पना ॥ ४७ ॥
उपवे[2]शे स्थिरा धीरा[3] गमने च जवाधिका ।
गतौ तु सलिला रम्या सर्वतस्त्रासवर्जिता ॥ ४८ ॥
चारुचामीकरच्छन्नपुष्पकेणोपशोभिता ।
अस्खलन्ती पदन्यासे यानेऽश्वतरी वरा ॥ ४९ ॥
मयूरगतिको वा(वा)ह्यस्तित्तिरीगतिसन्निभः ।
मरालगमनो वाऽपि चतुष्कगतिशोभि[4]तः ॥ १६५० ॥
गच्छतः कम्पतेऽश्वस्य पुच्छे[5]ग्रीवं[6] विशेषतः ।
त्वरिता गतिरि[7]त्यर्थं[8] मायूरीति निगद्यते ॥ ५१ ॥
शीघ्रं पदानि [9]कुरुते यत्र पुच्छं न कम्पते ।
सा गतिस्तैत्तिरी ज्ञेया हयवाहनकोविदैः ॥ ५२ ॥
पार्श्वाभ्यां दोलनं यत्र हंसवद्गच्छतो हरेः ।
शिरोऽपि म(विधु)नुते तद्वन्मरालीगतिरीदृशी ॥ ५३ ॥
पादैश्चतुर्भिः सञ्चारे ललितं यत्र गच्छति ।
चतुष्कगतिराख्याताऽनुत्तमा सुखदायिनी ॥ ५४ ॥
अश्वैश्चतुर्भिर्द्वाभ्यां वा युक्तश्चक्रयुगान्वितः ।
मत्तवारणकैर्भव्यैश्चित्रितैः परिशोभितः ॥ ५५ ॥
नानावर्णपताकाभिर्भ्राजितः सुदृढाक्षकः ।
उत्तमः स्यन्दनो याने नृपाणामेव निर्मि[10]तः ॥ ५६ ॥
शाकजैः फलकै[11]श्छन्ना यॉ[12] च वल्कलवेष्टिता ।
आयता सुदृढा नीरे[13] सा नौर्याने प्रशस्यते ॥ ५७ ॥

१ This line is repeated below in 49। २ D देश। ३ D धारा। ४ D भनः। ५ D च्छं। ६ D वा। ७ D र। ८ D ज। ९ A उ। १० A तम्। ११ D च्छि। १२ A यो। १३ A र।

वेणुकम्रा[1]भिरन्योन्यं गुम्फितो वर्तुलाकृतिः।
पिनद्धश्चर्मणा बाह्ये प्लवकोऽयं जलेचरः ॥ ५८ ॥

एतैर्यानैर्यथायोग्यं याति यः पृथिवीपतिः।
यानोपभोगः कथितः सोमेश्वरमहीभुजा ॥ ५९ ॥

इतियानोपभोगः ॥ १६ ॥

इदानीं छत्रभोगोऽयं कथ्यते राजवल्लभः।
हेमपट्टनिबद्धेन दण्डेनोपरि धारितम् ॥ १६६० ॥

नानावर्णसुसूत्राभिः कम्राभिः कृतपञ्जरम्।
श्वेतवस्त्रेण सञ्छन्नं मुक्तादामसुसूसकम् ॥ ६१ ॥

नीलविद्रुममुक्ताभं लम्बनैः परिशोभितम्।
चञ्चत्काञ्चनजातेन कलशेन विराजितम् ॥ ६२ ॥

पुण्डरीकसितच्छत्रं राजयोग्यमनुत्तमम्।
नीलपट्टनिबद्धानि रौप्यदण्डधृतानि च ॥ ६३ ॥

नानावर्णविचित्राणि झल्लरीभिर्युतानि च।
मेघडम्बरनामानि चामरोत्तंसितानि च ॥ ६४ ॥

छत्राणि विलसत्कान्तिर्मणि[2]भिर्जडितानि च।
[3]सैसौवर्णकलापस्थं (स्थ) चन्द्रकैः परिकल्पितम् ॥ ६५ ॥

[4]सुवर्णदन्ती(न्ति)दण्डेन रत्नेन परिमण्डितम्।
कलशेन तदुत्थेन शुभ्रेण परिशोभितम् ॥ ६६ ॥

पिच्छछत्रमिदं प्राहुः सौं[5]गिरीति विचक्षणाः।
रोहितैः पिञ्जरैश्चित्रैर्नानावर्णैर्नृपोत्तमः ॥ ६७ ॥

आतपत्रैरसंख्यातैः वा[6]रियन्नातपं चरेत्।
एतेषां शीतलां छायामाश्रितः पृथिवीपतिः ॥ ६८ ॥

सुखेन मोदते यत्तु छत्रभोगः प्रकीर्तितः।
छत्रभोगोऽयमुद्दिष्टः सोमेश्वरमहीभुजा ॥ ६९ ॥

१ D षा। २ F मण्डितानि वराणि च। ३ A सौवर्णक। ४ A दंतप्रकल्पेन दंतिदण्डेन परिकल्पितं।
५ D सिग। ६ A वरि।

॥ इति छत्रभोगः ॥ १७॥

शय्याभोगोऽयमधुना वर्ण्यते सुखदायकः ।
हंसपिच्छमयी काचिच्छाल्मलीतूलजा परा ॥ १६७० ॥

कार्पासरचिता चान्या केसरैरितरा कृता ।
पल्लवैः कल्पिता काचित् काचित्कुसुमनिर्मिता ॥ ७१ ॥

पानीयपूरिता काचिच्छय्येयं सप्तधा स्मृता ।
दन्ताङ्घ्रि (:) लो[1]हचरण(:)साष्टापदपदस्तथा ॥ ७२ ॥

वै[2]र(रव)श्च वलनं चैव वेग्रि[3]रुः (त्रिकः) पट्टिकामयः ।
दोलाक्षश्चेति कथिता मञ्चा विद्वद्भिरष्टधा ॥ ७३ ॥

शय्यां[4]नां लक्षणं वक्ष्ये मञ्चकानां तथैव च ।
मरालजठरोद्भूतैर्मण्डु(मृदु)भिः पु(पि)च्छगुच्छकैः ॥ ७४ ॥

श्लक्ष्णेन चर्मणा नद्धैः शय्या हंसमयी शुभा ।
शाल्मलीफलगर्भोत्थैः तू[5]लैर्बीजविवर्जितैः ॥ ७५ ॥

घ[6]नेन वासनाँ[7](सा)नद्धैः [8]शाल्मलीतूलिका भवेत् ।
कार्पासपिण्डकं यत्नाद्बीजं संस्फे[9]ट्य(स्फोट्य) पट्टके ॥ ७६ ॥

अयःशलाकया पश्चाद्धनुषा तं विवेचयेत् ।
दृढेन वाससाऽऽसी[10]व्य विशालपरिशोभिना ॥ ७७ ॥

या शय्या क्रियते मृद्वी सा तु कार्पासजा मता ।
केसरैः पद्मसम्भूतैर्नागपुष्पसमुद्भवैः ॥ ७८ ॥

सुरभीकुसुमोत्थैश्च तथा कुङ्कुमसम्भवैः ।
पटीपट्टेन चित्रेण गुम्फितैश्चारु शिल्पिभिः ॥ ७९ ॥

शय्या केसरजाऽऽख्याता सुगन्धिः पृथिवीभुजाम् ।
[11]कमलोत्पलकल्हाररम्भाकङ्कोल्लिपल्लवैः ॥ १६८० ॥

कोमलैः कल्पिता शय्या शीतला पल्लवाभिधा ।
मल्लिकापाटलीपुष्पैः कुसुमैश्चम्पकस्य च ॥ ८१ ॥

---

१ A ल। २ D च। ३ A वग्निकः F वग्रिहः। ४ A यने। ५ A स्थू। ६ D नने। ७ D मा
८ F तूली शाल्मलिका C शाल्मलीमा D लीतू। ९ A स्फे। १० A व्या। ११ D को।

अन्यैः सुगन्धिभिः पुष्पैरपच्छन्तैः कृता तु या ।
शय्या कुसुमजा नाम कामकेलिसुखावहा ॥ ८२ ॥

चर्मजा वारिणा पूर्णा तोयशय्या प्रकीर्तिता ।
द्विपदन्तकृतैः पादैश्चतुर्भिरुपशोभितै[१]ः ॥ ८३ ॥

दन्ताङ्घ्रिना(र्ना)म मञ्चोऽयम् सर्वदन्तमयः शुभः ।
ताम्रारकूटघटितश्चै[२]रणैस्तन्मयैः शुभैः ॥ ८४ ॥

लोहमञ्चकनामाऽयं सुदृढः परिकीर्तितः ।
चारुचामीकरानद्धो रचनापरिरञ्जितः ॥ ८५ ॥

अष्टापदमयः प्रोक्तो मञ्चकोऽयं चतुष्पदः ।
य[३]न्त्रिपत्रकृतैर्नादैरानन्दं तनुते नदन् ॥ ८६ ॥

वै[४]र(रव)मञ्चः समाख्यातो रतिकेलिषु कामुकैः ।
उपवेशनमात्रेण गच्छत्यूर्ध्वमधश्च यः ॥ ८७ ॥

दृढाङ्घ्रिश्चारुरूपश्च लव(वल)मञ्चः प्रकीर्तितः ।
त्वग्भिर्वेत्रस्य बाह्याभिस्तनुभिर्गुम्फितो घनम् ॥ ८८ ॥

कुटिलैश्चरणैर्युक्तो वेत्रमञ्चः प्रकीर्तितः ।
कार्पासगुणकप्ताभिः पट्टिकाभिः सुगुम्फितः ॥ ८९ ॥

दीर्घाभिश्चित्रवर्णाभिर्मञ्चोऽयं पट्टिकाभिधः ।
श्रीखण्डदारुघटितः कनत्काञ्चनभूषितः ॥ १६९० ॥

खचितो दिव्यरत्नैश्च मत्तवारणशोभितः ।
सौवर्णशृङ्खलाबद्धो लम्बमानः सदोलनः ॥ ९१ ॥

किञ्जल्कशय्यामा(य्यया)युक्तो दोलामञ्चः सुखप्रदः ।
वसन्ते हंसजा शय्या क्रीडायां पुष्पपत्रजा ॥ ९२ ॥

निदाघे तूलजा शय्या मध्याह्ने तोयजा शुभा ।
हेमन्ते शिशिरे चैव वर्षासु च विचक्षणः ॥ ९३ ॥

भजेत शय्यां कार्पासीं नृपः शीतापनुत्तये ।
शरत्काले तु कैञ्जल्कीं दोलामञ्चसमाश्रिताम् ॥ ९४ ॥

१ D ता । २ A च । ३ F यन्त्र D यन्त्रयन्त्रि । ४ D रव F चर ।

अधितिष्ठेन्महीपालो भोगार्थं सुविचक्षणः ।
एवंविधेषु मञ्चेषु शय्यास्वेवंविधासु च ॥ ९५ ॥

शेते विशाम्पतिर्यत्तु शय्याभोगः प्रकीर्तितः ।
शय्याभोगोऽयमाख्यातः सोमेश्वरमहीभुजा ॥ ९६ ॥

॥ इति शय्याभोगः ॥ १८ ॥

अधुना धूपभोगोऽयं वर्ण्यते सौरभोत्कटैः[1] ।
लाक्षागुग्गुलकर्पूररालकुण्डु[2]रुसि[3]ल्हकं ॥ ९७ ॥

श्रीखण्डं दारु स[4]रलं लघुकोष्ठं[5] च वालकैः ।
मांसीकुङ्कुमपथ्या च(श्च) कस्तूरीपूतिबीजकैः ॥ ९८ ॥

शङ्खनाभिनखै[6]श्चैव सितामधुघृतं गुडः ।
समान्येतानि चूर्णानि द्रवद्रव्यं विहाय च ॥ ९९ ॥

द्विगुणं लघुकर्पूरं चूर्णधूपोऽयमुत्तमः ।
एतान्येव हि सिल्हेन मिश्रयेन्मधुसर्पिषा ॥ १७०० ॥

गुडेन पिण्डयेत्पश्चात् पिण्डधूपो वरो मतः ।
द्रव्याण्येतानि तोयेन पिष्टानि मधुसर्पिषा ॥ १ ॥

वर्त्तिरूपाणि शुष्काणि वर्त्तिधूपो मनोहरः ।
रीतिरूपमयो वापि सुवर्णघटितोऽथवा ॥ २ ॥

खगो वाऽपि मृगो वाऽपि स[7]रन्ध्रः सम्पुटात्मकः ।
अङ्गारगर्भि[8]ते(तो) पिण्डेनान्वितो धूपमुद्गिरेत् ॥ ३ ॥

मुखकर्णादिभिश्छिद्रैः पिण्डधूपे त्वयं क्रमः ।
अङ्गारगर्भिते पात्रे [9]चक्रदण्डेन संयुते ॥ ४ ॥

विकिरेद्धूपचूर्णं तद्वारंवारमिति क्रमः ।
दन्तेन रचिते श्लक्ष्णे सुपात्रे बहुदण्डकैः ॥ ५ ॥

दण्डेन वा समायुक्ते धूप[10]ने सूचिसंयुते ।
सूचिकाग्रे विनिक्षिप्य वर्त्तिं सन्धुक्ष्य वह्निना ॥ ६ ॥

१ F रः। २ D न्दु ?। ३ A सिंहि। ४ A श। ५ A ष्ठ। ६ A ख। ७ A सं। ८ D ते। ९ D व। १० F पेन।

स्थगयेत्सम्प(म्पु)टेनाथ रन्ध्रैर्धूपो विनिःसरेत् ।
करण्डं दण्डसंयुक्तं पाणिना परिवर्त्तयेत् ॥ ७ ॥

आत्मनोऽपि मुखं क्वापि प्रेयसीवदनेषु वा ।
करण्डकमदण्डं तु धूपवर्त्तिसमन्वितम् ॥ ८ ॥

अंशुकान्तं क्षिपेद्वाऽपि खोम्पके वाऽपि निक्षिपेत् ।
धूपयेत शुभां शय्यां वसनेनावगुण्ठिताम् ॥ ९ ॥

पञ्चसैर्धौतवासांसि पिण्डकैश्चूर्णकैरपि ।
गृहं च पिहितद्वारं निरोधितगवाक्षकम् ॥ १७१० ॥

धूपयेद्बहलैर्धूपैः पिण्डधूमसमुद्भवैः ।
विलासचतुराणां हि नृपाणां च विनोदिनाम् ॥ ११ ॥

धूपभोगोऽयमाख्यातः सोमेश्वरमहीभुजा ।
भूलोकमल्लदेवेन धूपभोगोऽयमीरितः ॥ १२ ॥

इति धूपभोगः ॥ १९ ॥

योषितामुपभोगोऽयं कथ्यते स्मरदीपनः ।
अचापल्यं भयं लज्जा दाक्षिण्यमनुकूलता ॥ १३ ॥

मधुरस्वरता दाक्ष्यं पटुत्वं प्रियवादिता ।
मौनः शुचित्वं दाक्षिण्यं गुरुशुश्रूषणे रतिः ॥ १४ ॥

धर्मज्ञतार्जवं सत्यं कौशलं सर्वकर्मसु ।
हृष्टता स्मितहासित्वं पतिदोषनिगूहनम् ॥ १५ ॥

व्ययवैमुख्यमित्येते योषितां प्रवरा गुणाः ।
स्त्रीणां रूपवती श्रेष्ठा सुरूपासु सयौवना ॥ १६ ॥

सयौवनासु गीतज्ञा गीतज्ञास्वपि नर्तकी ।
उत्तरोत्तरमेतासु श्रैष्ठ्यं पूर्वगुणैः सह ॥ १७ ॥

एतैः सर्वगुणैर्युक्ता दुर्लभा रमणी भुवि ।
मृगी च पद्मिनी चैव चित्रिणी वडवा तथा ॥ १८ ॥

१ A F स्था। २ A जम्पने। ३ A अ। ४ F पाय। ५ D म। ६ D च। ७ C D F शु। ८ F वैर्गु।

हस्तिनी शङ्खिनी चेति षड्विधा जातिरिष्यते ।
आद्ये द्वे उत्तमे तत्र मध्यमे मध्यसंस्थिते ॥ १९ ॥

अन्त्यास्थिते कनिष्ठे च त्रिधा जात्या प्रकीर्तिताः ।
मध्यमोत्तमजातीया भोगयोग्या वरस्त्रियः ॥ १७२० ॥

हस्तिनी शङ्खिनी चेमे भोगाय परिवर्जयेत् ॥
पादौ कोकनदच्छायौ[1] गूढगुल्फोपशोभिनौ[2] ॥ २१ ॥

अनुपूर्वेण वृत्ते च जङ्घे ऊरू सकान्तिकौ ॥
पीवरं जघनं गुह्यमश्वत्थदलसन्निभम् ॥ २२ ॥

तनु वृत्तं तथा मध्यं वर्तुलावुन्नतौ स्तनौ ॥
कोमलं बाहुयुगलं[3] शिरीषकुसुमोपमम् ॥ २३ ॥

कङ्केलि[4]पल्लवाकारौ करावृज्वङ्गुलीयुतौ ।
आताम्रनखरौ ग्रीवा पूगीकण्ठोपमा मता ॥ २४ ॥

प्रवालमणिसन्दं[5]श(दर्शं) दशनच्छदसम्पुटम् ।
दाडिमीबीजसङ्काशा रदनाः सुमनोहराः ॥ २५ ॥

समौ तनुकपोलौ च श्रवणौ शुक्तिसन्निभौ ।
उन्नता सरल[6]स्रोता नासिका लक्षणान्विता ॥ २६ ॥

पक्ष्मले चक्षुषी दीर्घे त्रस्यन्मृगविलोकने ।
वक्रे दीर्घे भ्रुवौ भालमष्टमीचन्द्रसन्निभम् ॥ २७ ॥

भालानुरूपं शीर्षं च सतरङ्गाः शिरोरुहाः ।
सुप्रमाणा गलनि(ङ्गलति)का गतिर्मृगगजोपमा ॥ २८ ॥

क्षणे रोषः क्षणे तोषो बहुरीर्ष्याकुलेक्षणा ।
ऋतुप्रमाणसम्प्रीतिर्लालसा रतिकर्मणि ॥ २९ ॥

पद्मसौरभ्यसङ्काशमच्छं निधुवनोदकम् ।
चित्ते चञ्चलता दार्ढ्यमनुरागे प्रियं वचः ॥ १७३० ॥

१ D दाकारौ । २ C तौ । ३ D गु । ४ F ह्लि । ५ F सन्दे । ६ A ला ।

एतैर्गुणैः समायुक्ता मृगीजात्योपलक्षिता ।
मधुवर्णाः सुकान्ताश्च नखराश्चरणोद्भवाः ॥ ३१ ॥

अङ्गुल्यः संहता रु[1]ढ्यः (ऋज्व्यः) परिपाट्या समाः शुभाः ।
रक्तपङ्कजसङ्काशौ समौ पादतलौ शुभौ ॥ ३२ ॥

गूढौ गुल्फौ सुवृत्तौ च जङ्घे पादानुरूपके ।
रम्भास्तम्भनिभावूरू विशालं जघनं त[2]था ॥ ३३ ॥

ईषद्विकासिताम्भोजसदृशं स्मरमन्दिरम् ।
वलित्रितयशोभाढ्यं मुष्टिग्राह्यं च मध्यमम् ॥ ३४ ॥

स्थूलश्रीफ[3]लसङ्काशौ स्तनाव[4]विरलौ समौ ।
वर्त्तुले बाहुशिखरे बाहू सुललितावपि ॥ ३५ ॥

सुकुमारतरौ हस्तौ तले पल्लवकोमले ।
मुद्गशिम्बिसमाकाराः करशाखा मनोरमाः ॥ ३६ ॥

पद्मपत्रसमच्छा[5]यमधुराः करजा वराः ।
नातिस्थूला नातिदीर्घा न ह्रस्वा सुस(ष)मा शुभा ॥ ३७ ॥

ग्रीवा रेखात्रयोपेता बिम्बीभागनिभोऽधरः ।
पक्वदाडिमबीजाभा दन्ताः कान्तिमनोहराः ॥ ३८ ॥

तिलपुष्पसमाकारा नासिका सुमनोहरा ।
नीलोत्पलस्य नालेन समे श्रवणगे(पा)लिके ॥ ३९ ॥

शोभने श्रवसी गण्डौ समावुज्वलकान्तिकौ ।
कुन्दपत्रोदरासी[6]नशुभ्रभ्रमरसन्निभे ॥ १७४० ॥

लोचने प्रान्तसंरक्ते घनश्यामलपक्ष्मणी ।
सन्त्रस्तब(बा)लसारङ्गभङ्गीचञ्चलमीक्षणम् ॥ ४१ ॥

अधिज्यकामकोदण्डकुटिले सन्नते भ्रुवौ ।
अष्टमीचन्द्रसङ्काशं ललाटं सुमनोहरम् ॥ ४२ ॥

१ D रुज्वः F शव्ह्यः । २ D घनं । ३ A प । ४ D नौ च । ५ D माकारा । ६ D क्वारे शुभ्रताम्ररसान्तरे ।

बहवः श्यामलाः सूक्ष्मा मृदुदीर्घा[1]ः शिरोरुहाः ।
नववंशसमच्छाया ( यो ) वर्णः कान्तिमनोरमः ॥ ४३ ॥

गतिर्मत्तेभसदृशी शिरीषमृदुलं वपुः ।
पद्मसौरभसङ्काशो वपुःपरिमलः शुभः ॥ ४४ ॥

अम्भोजगर्भसंस्पार्धिगन्धं निधुवनोदकम् ।
कोकिलालापमधुरो ध्वनिः श्रुतिसुखावहः ॥ ४५ ॥

रम्यस्त्रीभावसंसर्गः शुचि चाल्पं च भोर्[2]जनम् ॥
अल्पभूषणसम्प्रीतिः श्वेतपुष्पाम्बरे रतिः ॥ ४६ ॥

मानः सौ[3]तिशयो लज्जा भूषणं परमं मतम् ॥
गुरुदेवार्चनासक्तिः सम्भोगे त्यक्तलज्जता ॥ ४७ ॥

दाक्षिण्यं दानशीलत्वं बन्धुप्रीतिर्मितं वचः ॥
सत्यवा[4]क्त्वं दृढा प्रीतिः शोभा भूषां विनाऽपि च ॥ ४८ ॥

एतैर्गुणैः समायुक्ता पद्मिनी कीर्तिता बुधैः ।
लघुपादतले रम्ये तनु[5]ंजङ्घे [6]सुशोभने ॥ ४९ ॥

किञ्चिद्वक्रौ शुभावूरू पृथुलं जघनस्थलम् ।
उन्नतः सुकुमारश्च सरसो मदनालयः ॥ १७५० ॥

त्रिवलीमध्यसङ्काशो मध्यभागो मनोहरः ।
पीनौ वृत्तौ सुरम्यौ च व[7]र्धमानौ पयोधरौ ॥ ५१ ॥

वक्षःस्थलं विशालं स्यादानुपूर्व्या तनू भुजौ ।
सुकुमारं करतलमङ्गुल्यः सरलाः शुभाः ॥ ५२ ॥

कम्बुनाभिनिभः कण्ठः किञ्चिदभ्युन्नतोऽधरः ।
सुच्छाया दशना नासा नातिदीर्घा न वामना ॥ ५३ ॥

तनू कपोलफलकौ कर्णौ शोभासमन्वितौ ।
दीर्घे तीक्ष्णे च नयने निम्बपत्रार्[8]धसन्निभे ॥ ५४ ॥

१ D र्घं । २ F तोलनं । ३ A सान्ति । ४ D वाक्य । ५ A नतु । ६ D च । ७ F वर्ते । ८ व ।

भ्रुवौ भालतलं रम्यं वक्राः कृष्णाः शिरोरुहाः ।
सुप्रमाणं व संस्थानं लतावत्तनुविग्रहः ॥ ५५ ॥

गीते नृत्ते च वाद्ये च रतिः सुललिता गतिः ।
सुगन्धि रागसलिलं सुसूक्ष्मस्वरभाषणम् ॥ ५६ ॥

कलाकौशलसम्प्रीतिः श्यामो वर्णो मनोहरः ।
गौरः श्या(रश्या)मोऽथवावर्णश्चित्रभूषाम्बरस्पृहा ॥ ५७ ॥

विचित्रे च रते प्रीतिश्चित्रिण्या लक्षणन्त्विदम् ।
अलक्तरससच्छाये शोभने पादयोस्तले ॥ ५८ ॥

गुल्फौ सुसंन्नतौ जङ्घे वृत्ते दीर्घे च मांसले ।
ईषद्वक्राकृती ऊरू गम्भीरं नाभिमण्डलम् ॥ ५९ ॥

उदरं तनु वृत्तं च स्तनावायतचूचुकौ ।
उरो विशालं बाहू च वृत्तौ दीर्घौ च मांसलौ ॥ १७६० ॥

रक्तपङ्कजसङ्काशौ कोमलौ करपल्लवौ ।
अङ्गुल्यः कोमला वृत्ता दीर्घा स्थूला च कन्धरा ॥ ६१ ॥

पीनौ रदच्छदौ रम्यौ दशनाः स्थूलसंहताः ।
तथा स्थूलायतौ कर्णौ नेत्रे नीलोत्पलप्रभे ॥ ६२ ॥

स्थूले भ्रुवौ तथा वक्रे निम्नं भालमथोन्नतम् ।
स्थूला दीर्घा घनाः केशा बहुरीर्ष्या मृदुर्गतिः ॥ ६३ ॥

गम्भीरमधुरा वाणी चलं चित्तं मृदुस्तनुः ।
निद्रा बुभुक्षा सततं स्निग्धकामुककामिता ॥ ६४ ॥

सम्भोगान्ते सरक्तत्वं मांसगन्धिर्द्रवोऽधिकः ।
सुरताहवशूरत्वं नवाङ्कुलरतिस्तथा ॥ ६५ ॥

इत्येतैर्लक्षणैर्युक्ता वडवा परिकीर्तिता ।
शङ्खिनी हस्तिनीशीला विशालार्द्रभगाऽधमा ॥ ६६ ॥

१ D समुन्न । २ D ललाटं तद । ३ A ता । ४ A ग्रन्थि । ५ A वाः । ६ A ताः । ७ A श ।
८ A F विष्ठीपाऽऽभगा Df...द्रिभगा । ९ C F गो ।

दुर्गन्धा दुःस्वभावा च तस्माद्भोगे विवर्जिते ।
सुरूपा कान्तिसंयुक्ताचपला[1] भयवर्जिता ॥ ६७ ॥

अस्वेदा च सुगन्धिश्च चिरकालनिमेषिणी ।
स्थिरस्तनी मिताहारा वलीपलितवर्जिता ॥ ६८ ॥

श्वेतभूषाम्बरप्रीता गौरश्यामोत्तमप्रिया ।
प्रसन्ना त्यागशीला च शौचाचारसमन्विता ॥ ६९ ॥

ईषल्लु(दृग्ल)क्षणसम्पन्ना योषिद्देवांशकोद्भवा ।
सुसंस्थाना सुतन्वी च तरङ्गितशिरोरुहा ॥ १७७० ॥

सहासवदनाम्भोजा पक्ष्मलाक्षी दृढस्तनी[2] ।
मितास्या तनुमध्या च दर्शनीयाँ[3] नितम्बिनी ॥ ७१ ॥

सुकुमारकराङ्घ्रिश्च सुभगा प्रियभाषिणी ।
कलाविद्भङ्गिचतुरा सदा साहसिके रता ॥ ७२ ॥

सदैवासत्यवचना सिद्धांशकसमुद्भवा ।
सुरम्यानिम्नवदना शफरीचललोचना ॥ ७३ ॥

मध्ये क्षामा कान्तिमती सपुष्पनखरावली ।
नातिस्थूला न च कृशा गीतवाद्यप्रिया सदा ॥ ७४ ॥

सुगन्धिकुसुमासक्ता गीतज्ञा चातिकामिनी ।
अन्यवस्थाचलप्रान्ता स्वैरिणी पट्टैहासिनी[4] ॥ ७५ ॥

ईदृग् लक्षणसंयुक्ता गन्धर्वांशकसम्भवा ।
सम्पूर्णचन्द्रवदना निम्ननासा कृशोदरी ॥ ७६ ॥

उत्तुङ्गभाला वक्रा(क्र)भ्रूश्चञ्चलविलोचनाँ[5] ।
तन्वी च हरितश्यामा घनवृत्तलघुस्तनी ॥ ७७ ॥

प्रमाणोत्सेधसंयुक्ता राजज्जघनमण्डला ।
श्लक्ष्णोरुर्वृत्तजङ्घा च निर्लोमा स्वेदवर्जिता ॥ ७८ ॥

१ D चापलभयवर्जिता । २ A धृढ । ३ A य । ४ A ट्ट । ५ A न्ना ।

कृशाङ्गुली स्वल्पनखी[1] स्वेदेपि च ससौरभा ।
गीतनृत्तकलादक्षा सम्भोगे चित्तहारिणी ॥ ७९ ॥

मौग्ध्यवैदग्ध्यसंयुक्ता सानुरागाऽतिकाङ्क्षिणी[2] ।
विलासविभ्रमोपेता विचित्रवसना(न)प्रिया ॥ १७८० ॥

सनर्महासचतुरा साऽप्सरोंशकसम्भवा ।
सहकारफलाकारवदना चारुहासिनी ॥ ८१ ॥

समभालतला[3] सुभ्रूस्तीक्ष्णापाङ्गविलोकिनी ।
स्वच्छगण्डस्थलच्छाया[4] वृत्तपीनपयोधरा ॥ ८२ ॥

सकान्तिरदना रम्यरेखालङ्कृतकन्धरा ।
तनुमध्या पृथुश्रोणी(णि) रुरुजङ्घा[5] मनोहरा ॥ ८३ ॥

माल्यमण्डनके दक्षा वृत्तज्ञा चपलाशया ।
उद्वेजयति भर्तारं काङ्क्षन्ती द्रविणं बहु ॥ ८४ ॥

पुनः सङ्कट्टते विद्याधरांशकसमुद्भवा ।
दीर्घानना निम्नघोणा लघुलोचनभामिनी ॥ ८५ ॥

त्रिकोणभालफलका घननीलशिरोरुहा ।
जङ्घाकाण्डे प्रकोष्टे च सूक्ष्मरोमसमन्विता ॥ ८६ ॥

विचूचुककुचाभोगा[6] मध्यभागे कृशा भृशम् ।
विशालजघनोपेता सुप्रमाणा लसन्नखी ॥ ८७ ॥

निगूहयित्री[7] गुह्यानि गुह्यकांशसमुद्भवा ।
नात्यायतमुखी दीर्घलोचना समनासिका ॥ ८८ ॥

तनुदन्तच्छदा दीर्वाधिका पृथुलहस्तिनी ।
विशालवक्षाः सुग्रीवा भूषणेषु रता सदा ॥ ८९ ॥

मृदुबाहुः श्लक्ष्णकक्षा करकाठिन्यसंयुता ।
तनुमध्या शुभतनुर्विशालजघनस्थला ॥ १७९० ॥

---

१ D खा। २ F भि। ३ A र। ४ D त। ५ A पु D रूरू। ६ A गो। ७ D यन्ती।
८ D धिषका पृथुलस्तनी।

ईषद्वक्रोरुजङ्घा च स्फुटिताङ्घ्रितला मनाक् ।
चलचित्ता प्रिये लोला पुष्पमाल्यविलेपना ॥ ९१ ॥

प्रस्थापयन्ती ताम्बूलं स्वीयं प्रियतमं प्रति ।
अत्यन्तच्छविसंयुक्ता श्यामकर्ण(वर्णा) मनोरमा ॥ ९२ ॥

एवं रूपगुणोपेता किन्नरांशकसम्भवा ।
तन्वी गौरी लघुकुचा दीर्घनेत्रा कृशोदरी ॥ ९३ ॥

लघुश्रोणी सदा भीरुरेवं धारयते दृढम् ।
गन्धवद्द्रव्यमाल्येषु लुब्धा शुद्धासनप्रिया ॥ ९४ ॥

ज्योत्स्नाध्वनिविहारेषु जलक्रीडासु लम्पटा ।
गोरश्यामा वक्रमतिश्छिद्रान्वेषणतत्परा ॥ ९५ ॥

एतल्लक्षणसंयुक्ता यक्षांशकसमुद्भवा ।
तन्वी कान्तिमती किञ्चिद्रक्तपिङ्गललोचना ॥ ९६ ॥

अच्छगण्डस्थला स्निग्धघननीलशीरोरुहा ।

ईषद्वक्रितजङ्घा च लीलाकुटिलगामिनी ॥ ९७ ॥

गृहान्तर्वर्तिनी नित्यं क्षीरखण्डासवप्रिया ।
सखीः सङ्घट्टयत्याशु पुनर्विघटयत्यपि ॥ ९८ ॥

गौरश्यामा च वर्णेन नागांशकसमुद्भवा ।
वक्रालका कुन्तलिनी दीर्घभ्रूर्दीर्घलोचना ॥ ९९ ॥

वृत्तस्तनी लघुतनुः कङ्गुश्यामा समोदरी ।
उत्तुङ्गजघनाभोगा श्लक्ष्णजङ्घोरुशालिनी ॥ १८०० ॥

कोमलाङ्घ्रितलाऽताम्रनखरावलिरञ्जिता ।
कातरा गूढसञ्चारा परवेश्माशनप्रिया ॥ १ ॥

एवं रूपगुणोपेता पित्र्यंशकसमुद्भवा ।
स्म(स्मे)रानना विशालाक्षी दृढस्तनमनोहरा ॥ २ ॥

१ A नम्। २ A नुष। ३ A धृ। ४ D जाल। ५ A दु।

मृदुबाहुः कृशा मध्ये सुसंस्थान(ना)नितम्बिनी।
रम्यजङ्घोरुयुगला मृदुपादतला वरा ॥ ३ ॥

गौराङ्गी दृढचित्ता च देवभक्ता[1] पतिव्रता।
ऋजुस्वभावा दान्ता च कोपना सुप्रसादिनी ॥ ४ ॥

स्वल्पाशना[3] च धर्मज्ञा ऋष्यंशकसमुद्भवा।
ऋक्षवानरमार्जारदैत्यदानवरक्षसाम् ॥ ५ ॥

पिशाचखरशार्दूलमत्स्यसैरिभपोत्रिणाम्।
सारमेयाऽऽखुनकुलरुरुकाकगवामपि ॥ ६ ॥

क्रोष्टुवृश्चिकहंसानां नक्रकुक्कुटयोरपि।
अन्यासामपि जातीनामंशकोद्भवयोषितः ॥ ७ ॥

रूपस्वभावगन्धाद्यैर्दूषिताः परिवर्जयेत्।
क्षत्रियान्वयसम्भूता शीलाचारगुणान्विता ॥ ८ ॥

सुरूपा चानुकूला च तरुणी शुभलक्षणा।
मृगी वा पद्मिनी वापि चित्रिणी वडवा तथा ॥ ९ ॥

[4]देवाद्यंशकसम्भूता राज्ञी कार्या महीभुजा।
वैश्यशूद्रकुलोत्पन्ना रूपयौवनसंयुता(ः)॥ १८१० ॥

गीतनृत्तकलादक्षा चि(श्चि)त्तज्ञाः प्रेमनिर्भराः।
सम्भोगसुखसाम्राज्यसंवर्धनविचक्षणाः ॥ ११ ॥

अवरोधवधूः कान्ताः कुर्याद्भोगाय भूपतिः।
रूपलावण्यसंयुक्ता युक्तास्तारुण्यसम्पदा ॥ १२ ॥

सविलासा विलासिन्यः कर्तव्याः पृथिवीभुजा।
दिव्यरत्नविभूषाभिर्वस्त्रमाल्यादिलेपनैः ॥ १३ ॥

यानासनगृहैर्भव्यैर्माननीया यथाक्रमम्।
ईक्षणैर्नर्मभिर्गोष्ठ्या हसितैः स्पर्शनैरपि ॥ १४ ॥

१ A दै। २ A वो। ३ A स। ४ D देवताद्यंश। ५ A त्रां। ६ A तां। ७ A क्षां। ८ A

क्रीडाभिश्च प्रियालापैः सम्भोगैस्तांश्च रञ्जयेत् ।
वस्त्राभरणदानैश्च पानखादनतर्पणैः ॥ १५ ॥

प्रेमनिर्भरसंलापैर्वनादिक्रीडनैरपि ।
तोषयेद्योषितस्तास्तास्तुष्टा भोगाय कल्पयेत् ॥ १६ ॥

भोजने मज्जने कान्ता पादाभ्यङ्गेऽङ्गमर्दने ।
केशसंवाहने चैव दिव्यगन्धविलेपने ॥ १७ ॥

गीतवाद्यश्रुतौ वृ(नृ)त्तप्रेक्षणे चारुदर्शने ।
जलादिक्रीडने चैव योजयेत्ताः सुयोषितः ॥ १८ ॥

अतोऽयमुपभोग्यत्वाद्योषिद्भोगः ॰ोर्तितः ।
राज्ञः सप्ताङ्गपूर्णस्य निःशेषीकृतवैरिणः ।
विंशतिः प्राह भोगानां श्रीमान् सोमेश्वरो नृपः ॥ १९ ॥

कन्दर्पोत्सवहेतुमद्भुतरसप्रोल्लासलीलास्पृशम्
विद्वन्मानसरञ्जनीं जनतया सत्कीर्तितां प्रत्यहम् ।
साश्चर्यामुपभोगविंशतिमिमां सोमेश्वरो भूपति-
र्वाग्देवीकुलनन्दनः कथितवान् प्रत्यर्थिभूपान्तकः ॥ १८२० ॥

इति श्री महाराजाधिराज-सत्याश्रयकुलतिलक-चालुक्याभरण-श्रीमद्भूलोकमल्ल-
श्रीसोमेश्वरविरचिते मानसोल्लासे राज्योपभोगकथने
तृतीयोऽध्यायः समाप्तः ॥

---

१ D स्तां । २ D नानागुणेन ।

# इदानीं प्रमोदापादकविनोदाः कथ्यन्ते ।



अत ऊर्ध्वं प्रवक्ष्यन्ते विनोदा हर्षहेतवः ।
विंशतिः सङ्ख्यया ते स्युर्लक्ष्यलक्षणसंयुताः ॥ १ ॥

क्षुरिकाखड्गकोदण्डचक्रकुन्तगदादिषु ।
शस्त्रेषु विविधैर्न्यासैः शिक्षितश्च तिजश्रमः ॥ २ ॥

तत्तद्विद्यान् समाहूय सेवकान्सचिं[1]वादिकान् ।
कुमारान् मण्डलाधीशान् परमण्डलिकानपि ॥ ३ ॥

पण्डितान् काव्यकर्तॄं[2]श्च देशभाषाविशारदान् ।
पा[3]ठकान्गा[4]यकांश्चैव सूतमागधवं[5]न्दिनः ॥ ४ ॥

अन्तःपुरपुरन्ध्रीश्च शुद्धान्तवरयोषितः ।
विलासिनीर्मनःकान्ताः प्रसिद्धाः पण्ययोषितः ॥ ५ ॥

अलङ्कृ[7]तास्तथा सर्वान्यथास्थानं निवेशयेत् ।
ततः स्वयं समुत्थाय प्र[6]मोदनमथाचरेत् ॥ ॥ ६ ॥

घनं श्लक्ष्णं सितं वस्त्रं विलासपरिशोभितम् ।
आजानुलम्बिनं वृत्तं वीरकच्छादिवेष्टितम् ॥ ७ ॥

पञ्चवर्णैकपट्टैश्च चित्रपट्टैर्मनोहरैः ।
समन्ततो यथाशोभं समानाञ्चलमानतः ॥ ८ ॥

क्षुरिकागर्भितं भव्यं नत्काञ्चनकल्पितम् ।
दलं प्रसूतिसङ्काशं दृढप(स)ञ्चादिवेष्टितम् ॥ ९ ॥

तिलकं पूर्णचन्द्राभे रचयेद्भुजमस्तके ।
चन्दनं घुसृणोपेतं हेमपट्टसमाकृति[9] ॥ १० ॥

ललाटे तिलकं कुर्यान्मध्ये कज्जलरेखया ।
तस्याः पार्श्वे च रेखाभ्यां[10] सिताभ्यां परिभूषयेत् ॥ ११ ॥

---

१ A वि। २ A तॄं। ३ A ट। ४ A न्मा। ५ A व। ६ D सा। ७ D मृ। ८ A ह्नुतम्।
९ A तिः। १० A भ्यो।

शेषभोगोपमां चर्चां चन्दनेनोरसि न्यसेत्[1]।
द्वीपिपुच्छाजिनेनाथ कुर्याच्छिरसि शेखरम् ॥ १२ ॥

चामीकरमयां(यीं) कण्ठे चारुशृङ्खलिकां[2][3] क्षिपेत्।
हस्तयोर्हेमवलयौ कर्णयोः स्वर्णपत्रके[4] ॥ १३ ॥

एवं रचितशृङ्गारो वीरमूर्तिर्मनोहरः।
प्रविशेत्खुरलीं रम्यां प्रेक्षकैः परिशोभिताम्[5] ॥ १४ ॥

[6]विहितोचितशृङ्गारो(रः) शस्त्रविद्याविशारदम्।
प्रतियोगिनमास्थार्य[7][8] शस्त्रविद्यां विनोदयेत् ॥ १५ ॥

वितस्तिमात्रिकाहीनं मध्यमं[9] विहितिनस्ति च।
स्थापयित्वोत्तमां शस्त्रीं गृह्णीयाच्छिक्षया[10][11] नृपः ॥ १६ ॥

अङ्गुष्ठपर्वमानेन माननीयासिधेनुका[12]।
मुष्टिभागं परित्यज्य गणयेद्वंशपृष्ठतः ॥ १७ ॥

आयुर्लक्ष्मीमृ(र्मृ)ति[13][14] चे(श्रे)ति समुच्चार्य पुनः पुनः।
आयुर्लक्ष्म(क्ष्मी)प्र(प)दे शस्ता वर्ज्या मृत्युपदे स्थिता[15] ॥ १८ ॥

तीक्ष्णधारा दृढा[16] लघ्वी तिर्यग्रेखाविवर्जिता[17]।
अभिन्नधारा नात्युच्चैर्नीचैस्तिष्ठेत्ससौष्ठवम्[18] ॥ १९ ॥

वामं पादं तथा सव्यं प्रसृतं बाहुदण्डकम्।
पुरस्कृत्यावतिष्ठेत सङ्ग्रामेच्छ परं प्रति ॥ २० ॥

समुष्टिकं बाहुदण्डं दक्षिणं क्षुरिकान्वितम्।
शिरःसमं समुत्क्षिप्य भैरवं स्थानमाचरेत् ॥ २१ ॥

दक्षिणं क्षुरिकाहस्तमपसार्य[19] च पृष्ठतः।
वामदण्डं प्रसार्याग्रे पल्लीवालं प्रदर्शयेत् ॥ २२ ॥

क्षुरिकाग्रे तथा दण्डं प्रसार्य पुरतः समम्।
पुरतो नम्रगात्रस्तु शुनकस्थानकं न्यसेत् ॥ २३ ॥

---

१ A थं। २ A र। ३ F ङ्खिल। ४ A कै। ५ A परं। ६ F omits these two lines. ७ D ज्ञ। ८ D म्य। ९ A तस्तिकम्। १० A घृ। ११ D करयो नृं। १२ D मेरु। १३ D क्ष्मीं। १४ D तिं चेति। १५ D ते। १६ A धृ। १७ A ताः। १८ A वः। १९ A त्वा।

प्रसार्य दक्षिणं बाहुमसिधेनुमधोमुखीम् ।
उरसि न्यस्तदण्डस्तु स्थानकं नू[1]कमाचरेत् ॥ २४ ॥

क्षुरिकाग्रं समुन्नम्य नीचे तु मणिबन्धने ।
दण्डं चोरसि संस्थाप्य विनूकं स्थानमाश्रयेत् ॥ २५ ॥

वामे भागे सशस्त्रीकं करं सन्न्यै[2]स्य कम्पयन् ।
दण्डं[3]वत्सन्न्यै[4]सेद्दण्डं लुलितं स्थानकं भजे[5]त् ॥ २६ ॥

क्षुरिकाग्रं प्रसार्याग्रे दण्डं सङ्कोच्य वक्षसि ।
नहयं स्थानकं कुर्याद्भूप(पः) सौष्ठवसंयुतम् ॥ २७ ॥

असिधेनुमुरोदेशे कृत्वा दण्डं तद[6]ग्रतः ।
नट्टकं नाम संस्थानं कुर्यात्सँ[7] रञ्जयँत्स(न्स)ताम् ॥ २८ ॥

जानुनोर्[8]मध्यभागे तु शस्त्र्यं[9]ग्रेण स्पृशन्भुवम् ।
वामं प्रसार्य दोर्दण्डं स्थानं रोपितकं चरेत् ॥ २९ ॥

दण्डं[10]कस्य शिरस्थाने[11] [12]सांवि(सासि)धेनुं करं दधत् ।
वामदण्डं क्षिपन्नग्रे स्थानं पोत्ताङ्गुलं भजेत् ॥ ३० ॥

उत्क्षिप्य दक्षिणं बाहुं सासिधेनुं मृगारिवत् ।
दण्डं नीचं तथा कृत्वा स्थानं व्याघ्रनखं श्रयेत् ॥ ३१ ॥

वामदण्डस्थलस्याधः कुर्व[13]न्मूर्मिं(र्वीं)सशस्त्रिक(का)म् ।
दक्षिणे च स्तने दण्डं भजेदर्धकपोलके ॥ ३२ ॥

वामं पुरःस्थितं पादं दक्षिणेन स्पृशेन्नुं[14] ।
वामं पुनः क्षिपेदग्रे दक्षिणेन पुनः स्पृशेत् ॥ ३३ ॥

तथैवोपन्यसेत्पादं दक्षिणं चरणेन तु ।
गतागतैर्विनिर्गच्छन्पदं[15]ग्राहं समाचरेत् ॥ ३४ ॥

पुरःस्थितेन पादेन पाँ[16]श्चात्यं घट्टयेत्पुनः ।
तदेवाग्रे क्षिपन्[17]गँच्छन् पदप्रासिं[18] गतिं भजेत् ॥ ३५ ॥

१ D रू । २ A न्य । ३ A ण्डत्स । ४ A न्य । ५ A वेत् । ६ D म । ७ D सं । ८ D ये । ९ D स्त्रा । १० A ल । ११ A नं । १२ D साचिधेनुकरं । १३ D र्यन्मू । १४ D तु । १५ D पा । १६ D पश्चात्सं । १७ D पादं । १८ A स्तिग ।

न्यस्तौ च पादावुत्क्षिप्य प्रसर्पेश्च शनैः शनैः ।
अनुक्षेपगतिं कुर्यात् सर्पणेन विसर्पणः ॥ ३६ ॥

पादयोर्[2]द्रुतसञ्चारैरीषदुत्क्षेपलक्षणैः ।
सर्पणं सर्पवत् कुर्यात्सर्पिकां गतिमाचरेत् ॥ ३७ ॥

आकुञ्चितैस्तथा पादैर्लीलाचङ्क्रमणाश्रितैः ।
मत्तवारणवद्गच्छन्मत्तेभगतिमाचरेत् ॥ ३८ ॥

जिघृक्षया [3]द्रुतं गत्वा यदुत्लुत्यापसर्पति ।
तां गतिं वायसीं बिभ्रद्विचरेच्छस्त्रकोविदः ॥ ३९ ॥

आकुञ्चिताभ्यां पादाभ्यामङ्गुल्यग्रै(ः) स्पृशन्महीम् ।
वाकोटीं गतिमास्थाय सञ्चरेत्क्षुरिकाकरः ॥ ४० ॥

गात्रसङ्कोचनं कृत्वा सिंहवल्लङ्घयन्ध्रुवम् ।
पञ्चाननगतिं कुर्वन्दर्शयेत्पाणिलाघवम् ॥ ४१ ॥

किञ्चिदाकुञ्चयन् शस्त्रीं किञ्चिदालोलयन्भुजम् ।
आवर्तैः परिवर्तैश्च [6]तथा सव्यापसव्यकैः ॥ ४२ ॥

भ्रामयेत् क्षुरिकामूर्ध्वं पृष्ठे पादे तथाऽग्रतः ।
कक्षयोः कण्ठदेशे च पादसञ्चारसंयुतः ॥ ४३ ॥

विद्युत्पञ्जरमध्यस्थमिवात्मानं प्रदर्शयेत् ।
चारणे धारणे चैव धारणे मारणे तथा ॥ ४४ ॥

अमोघां दर्शयेदाशां दुर्निवारो भयङ्करः ।
शस्त्रीं प्रदर्शयेदेवं दुष्टाशयविभीषणीम् ॥ ४५ ॥

प्रेयसीं मानसोल्लासां विद्वज्जनविनोदिनीम् ।
चतुर्वितस्तिकां शस्त्रीमादाय नृपतिस्ततः ॥ ४६ ॥

दक्षिणाङ्घ्रिं पुरस्कृत्य दण्डं धृत्वा तथोरसि ।
पूर्ववद्भ्रामयेदेनां करतालसमन्विताम् ॥ ४७ ॥

१ D नातिसर्पणे। २ A भृ। ३ A द्रु। ४ A द्द। ५ A त्रिं। ६ A सव्याश्च व्य F सव्यैश्च। ७ D शीर्षं। ८ A द्य। ९ A श्व। १० A घा।

सम्भारैः कथितैः पूर्वं दर्शयेत्पादलाघवम् ।
धारापू(घा)तो विधिस्तस्याः कथितः पूर्वसूरिभिः ॥ ४८ ॥

खोच्छ(ञ्च)नं[1] च तथा चान्ये प्रवदन्ति मनीषिणः।
मतद्वयानुसारेण धाराघातैश्च खोञ्चनैः[2] ॥ ४९ ॥

चतुर्वितस्तिकाशस्त्र्या विद्योत्कर्षं प्रदर्शयेत्।
आदाय च ततः शस्त्रीं दीर्घां पञ्चवितस्तिकाम् ॥ ५० ॥

कर्णोपान्ते तु विन्यस्य मुष्टिं परजयोर्जिताम्[3] ।
वामं बाहुं प्रसार्याथ करशाखामुखैः स्पृशन् ॥ ५१ ॥

शस्त्रीमुखं ततः पादैरुत्प्लवेत चरेदपि ।
निषीदेत्कूर्मसंस्थाने लाघवेन तथोत्पतेत् ॥ ५२ ॥

खोञ्चयेदग्रघातेन दीर्घशस्त्र्या[4]म(स्व)यं मृधेः(धे) ।
दीर्घासिधेनुके चित्र्यं(काचित्रं) दर्शयित्वेति पार्थिवः ॥ ५३ ॥

ततः खड्गविनोदेन रञ्जयेत्प्रेक्षकान्[6] भृशम् ।
क्षुरिकोक्तप्रमाणेन गणयेत् खड्गमुत्तमम् ॥ ५४ ॥

पञ्चाँ[7]शताङ्गुलैः श्रेष्ठः[8] पञ्चत्रिं(विं)शतिकोऽवरः।
अनयोर्मध्यमानेन मध्यमः परिकीर्त्यते[9] ॥ ५५ ॥

अव्रणः पोगलो(रो)पेतस्तिर्यग्भेदविवर्जितः।
व्रणयुक्तोऽपि निस्त्रिंशो बिल्वकुं[10]ञ्जरकुं[11]ण्डलैः ॥ ५६ ॥

वर्धमानध्वजच्छत्रस्वस्तिकैश्च व्रणैः शुभैः(भ)ः।
मानहीनो विभिन्नश्च कुं[12]ण्ठितो ध्व[13]निवर्जितः ॥ ५७ ॥

[14]नेत्रचित्तविरोधी च वर्जनीयो दुरासदः ।
असिर्मरकतश्यामः पोगलैः(रैः) परिवर्जितः ॥ ५८ ॥

बाणबाहुव[15]नच्छेदी बाणाय शार्ङ्गिणा धृतः।
कृपाणः शाद्वलश्यामस्तनु[16]वद्दीर्घपोगरैः[17] ॥ ५९ ॥

---

१ F खांचनं। २ D च। ३ D जि। ४ A स्त्रा। ५ A वि। ६ A का। ७ A ञ्च। ८ A ष्ठ। ९ A कथ्य। १० A प। ११ A तु। १२ A कुंवि। १३ D र्धि। १४ A वि। १५ A नव। १६ A न। १७ D लः।

अच्छेद्यो रोहिणीवाहः पौ[1]लस्त्येन धृतः पुरा।
कुटिलैः पोगरै[2]र्युक्तो वरस्क(रः के)सरसन्निभैः ॥ ६० ॥

मत्कुणः करवालोऽयं लोहवर्णौ[3] न वर्ण्यते।
गोजिह्वापल्लवप्रख्यः पोगरो यत्र दृश्यते ॥ ६१ ॥

असिर्निरवहो नाम द्विषच्छेदकरः शुभः।
तरुणीकेशसङ्काशः सूक्ष्मपाण्डुरपोगरः ॥ ६२ ॥

भद्राङ्गः करवालोऽयं भद्रकाली[4]करस्थितः।
राजजम्बूफलश्यामो व[5]क्रपाण्डुरपोगरः ॥ ६३ ॥

स्निग्धच्छायव[6]पुः खड्गः क[7]रवालोऽभिधीयते।
असिः प्रत्यग्रजीमूतशकलश्यामलच्छविः ॥ ६४ ॥

पाठी[8]न्त्वक्समाकारै[9]पोगरोऽयं सुबा[10]णकः।
केलिचन्द्रकसंकाशैः पोगरैर्निबिडै[11]ः श्रितः ॥ ६५ ॥

क[12]च्छेल्लक इति ख्यातः खड्गै[13]ः खड्गभृतां वरै[14]ः।
तमालव्यालरोलम्बा[15]निकुरुम्बसमच्छविः ॥ ६६ ॥

कौ[16]क्षेयकः समा[17]ख्यातः पुरुषाकारपोगरः।
एरण्डबीजसङ्काशौ[18](श)पो[19]गरस्तारपट्टकैः[20] ॥ ६७ ॥

रामारोमावलिश्यामो न नमेन्नामितोऽप्यसिः।
नववारिधरः(र) श्यामः पिङ्गाकुञ्चितपोगरः ॥ ६८ ॥

खड्गः षं[21]ढालको नाम विषवज्रभयापहः।
स्वर्णचै[22]श्चूनिभैः सूक्ष्मैः पोगरैः स्वर्णपञ्जरः ॥ ६९ ॥

मुक्ताचूर्णसमाका[23]रैः ख्यातस्तित्तिरवज्जरः(ज्रकः)।
पोगरैः कज्जलप्रख्यै[24]ः खड्गः स्यात्कालवज्जरः(ज्रकः) ॥ ७० ॥

वियत्श्याम(च्छया)वपुःसारः स्वल्पपाण्डुरपोगरः।
सरोजिनीच्छदच्छायः कौ[25]ङ्गिः खड्गोऽभिधीयते ॥ ७१ ॥

१ A पो। २ A गारे। ३ D र्णेन A र्णौ। ४ A लीर। ५ D क्त्र। ६ A पुरः ख। ७ A वेक्षि। ८ A ठी। ९ A रः। १० D वा। ११ A डै। १२ D बे। १३ A ङ्गं। १४ D F मतः। १५ D निरुल F निकुरं। १६ A च्छे। १७ A मीताख्यः। १८ D शाः। १९ D पोगराः। २० D काः। २१ F पढा D षडा। २२ D चूर्ण। २३ A गा। २४ A ख्यै। २५ D कौ।

कदलीशृङ्खला वापि यस्मिन्दृश्यान्तरान्तरा ।
वर्णपोगरभेदेन खड्गजातिर्निरूपिता ॥ ७२ ॥

सोमेश्वरनरेन्द्रेण शस्त्रशास्त्रकलाविदा ।
कोशात् खड्गं समाकृष्य बिलादाशीविषं यथा ॥ ७३ ॥

चर्म वा फलकं वापि गृह्णीयाद्वामपाणिना ।
पाणिना भ्रामयेत्खड्गं चर्म वामेन चालयेत् ॥ ७४ ॥

पूर्वोक्तपदसञ्चारैः सञ्चरेत विचक्षणः ।
शीर्षस्योपरि संस्थाप्य खड्गचर्म तथोरसि ॥ ७५ ॥

दक्षिणाङ्घ्रिं पुरस्कृत्य स्थानं शिखरकं श्रयेत् ।
वामं हस्तं प्रसार्याग्रे चर्मणा फलकेन वा ॥ ७६ ॥

कर्णोपान्ते समासंज्य स्थानं कापो[3]लकं भजे[4]त् ।
वक्षस्यासज्य फलकं खड्गं तत्रैव बाह्यतः ॥ ७७ ॥

परस्यान्तरमीक्षेत श्रीवत्सं स्थानमाश्रितः ।
खड्गं महीमुखं कृत्वा खड्गाग्रं पुरतः समम् ॥ ७८ ॥

[6]वीक्ष्यमाणः परच्छिद्रं स्थानं भूमण्डलं भँजेत् ।
कुक्षिदेशे त्सरुं कृत्वा फलं तिर्यक्तथोरसि ॥ ७९ ॥

[10]अग्रे प्रसार्य फलकं तीक्ष्णाग्रं स्थानकं न्यसेत् ।
कडगं चरणे विन्द्याद[11]ोलगं दक्षिणाङ्गजे(के) ॥ ८० ॥

पोगरं वामभागे स्यात्कालवल्कं तु मस्तके ।
आनाभि कण्ठपर्यन्तं खड्गाग्रेण तु भेदनम् ॥ ८१ ॥

मुनयन्नाम तत्प्रोक्तं कौक्षेयकविचक्षणैः ।
वारणं हननं तेषु पञ्चघातेषु पाटवम् ॥ ८२ [illegible]॥

दर्शये[12]द्रेचनाघातं हस्तलाघवमा[13]चरेत् ।
फलके वा तथा चर्मण्यङ्गं सर्वं निगूह्य च ॥ ८३ ॥

१ A शख D F शादूख । २ D F साद्य । ३ D यो । ४ D वे । ५ D F स्यासाद्य । ६ A व ।
७ D न्यसेत् । ८ D शस्थितम् । ९ D ग्य । १० A प्रप्र । ११ D ह्रो । १२ D द्धननं । १३ D श्भे ।

सञ्चरेत्परघातार्थं शून्यं पश्येत्[1]पराङ्गकम् ।
पञ्चघातप्रयोगं च पञ्चघातनिवारणम् ॥ ८४ ॥

पादलाघवसंस्थानं चालनं खड्गचर्मणो[2] ।
प्रदर्श्य रञ्जयेद्राजा सर्वां[3]श्च खुरलीगतान् ॥ ८५ ॥

बद्धगोधाङ्गुलीत्राणस्ततो गृ[4]ह्णीत कार्मुकम् ।
पक्ववंशकृतं भव्यं गोलादरदरञ्जितम् ॥ ८६ ॥

लाक्षाविलिप्तं कान्तं च स्नायुभिः परिवेष्टितम् ।
स्वर्णपट्टनिबद्धं च नानारत्नविचित्रितम् ॥ ८७ ॥

सुप्रमाणं दृढं रम्यमुर्छां(च्छा)लगुणसंयुतम् ।
त्रिपर्व पञ्चपर्वापि सप्तप[6]र्वं तथैव च ॥ ८८ ॥

नवपर्वं ज्यया युक्त[7]मर्कवल्कसमुत्थ(त्थ)या ।
मौर्व्या वा दृढया सम्यक् श्लक्ष्णया समयापि च ॥ ८९ ॥

मस्तकेन कृताधारं मुष्टिसौख्यं[10]विधायिना ।
[11]सहस्रं सार्धसाहस्रं द्विसहस्रमिति क्रमात् ॥ ९० ॥

[12]बालानां सङ्ख्यया युक्तं मृदु मध्यं तथोत्तमम् ।
उत्तमेन दृढं हन्याद्दूरं मध्येन दर्शयेत् ॥ ९१ ॥

मृदुना च तथा लक्ष्यं लाघवं चित्रमेव च ।
उभावंसौ नतौ कार्यावुरश्च विततं तथा ॥ ९२ ॥

पूर्व(र्वे) प्रसारितो[13] बाह्य(ह्यो) दृढ[14]मुष्टिरकम्पितः ।
मणिबन्धे मनागन्तं[15](न्तः) वक्रः कार्यः स्वकल्पशः ॥ ९३ ॥

मुष्टेरभि[16]मुखं वक्रं अंसस्योपरिसंस्थितम् ।
चित्र(बु)कांश(स)स्य मध्यस्थमन्तरं चतुरङ्गुलम् ॥ ९४ ॥

पूर्वबाहुः समः कार्योऽप्यपरो ब(व)लिनो(तो) भुजः ।
दृष्टिर्लक्ष्यं[17]गता कार्या पार्श्वे च ऋजुसंस्थित(ते) ॥ ९५ ॥

---

१ A ग। २ णोः। ३ A र्वा। ४ A ग। ५ A स्था। ६ A र्वं। ७ A र्क्तं क ( F च ) D वा। ८ A यां। ९ D रम्म। १० A ख्या। ११ A सहस्रं साहस्रं द्वैसाहस्रमिति क्रमात्। १२ D वा। १३ D ते। १४ A ढा। १५ A न्तु। १६ D म। १७ A क्ष।

पूरकेण समायुक्तं वायुना जठरं दृढम् ।
त्रिकं च सन्नतं कार्यं पादौ स्थानस्थितौ दृढौ ॥ ९६ ॥

एवं लक्षणसंयुक्तं दर्शयेत्सौष्ठवं[1] नृपः ।
पूर्वमाकुञ्चितं पादं चापस्थानाङ्घ्र्योजितम् ॥ ९७ ॥

तिर्यक्प्रसारितं कृत्वा पृष्ठे[2] पादं तथाऽपरम् ।
अङ्गुष्ठः पूर्वपादस्य पश्चात्पादकनिष्ठिका ॥ ९८ ॥

वितस्तिपञ्चकं मध्यं तयोरालीढकं[3] भवेत् ।
व्यत्यासं पादयोः कृत्वा प्रत्यालीढं प्रयोजयेत् ॥ ९९ ॥

वैशाखे तु समौ पादौ वितस्तित्रयमन्तरम् ।
वितस्त्यन्तरमात्रौ तु समौ पादौ प्रयोजयेत् ॥ १०० ॥

पूर्ववत्पादसंस्थानं समपादं प्रदर्शयेत् ।
चतुर्वितस्तिकं मध्यं तिर्यक् पादावुभावपि ॥ १ ॥

अस्त्रादिवाहने शस्तं मण्डलं स्थानकं विदुः ।
पूर्वाङ्घ्रिपार्ष्णेरारभ्य पार्श्वाभ्या(श्चात्या)ङ्गुष्ठकावधि ॥ २ ॥

वितस्तिमात्रं[4] मध्यं चेज्जातं जातं(स्थानं) प्रदर्शयेत् ।
जातस्य वैपरीत्येनाभिजातं नियोजयेत् ॥ ३ ॥

[5]पश्चात्याङ्घ्रि(पाश्चात्याङ्घ्रिं)समुत्क्षिप्य हंसपादं प्रकाशयेत ।
बाह्ये तौ वलितौ पादौ जानुनी च भुवि स्थिते ॥ ४ ॥

आसनं दार्दुरं कृत्वा प्रौढिं प्रकटयेन्नृपः ।
अधः पादतले कृत्वा पद्मासनमथाचरेत् ॥ ५ ॥

वामं जानु क्षितौ कृत्वा दक्षिणं पादमुत्कटम् ।
गरुडस्यासने स्थित्वा गारुडान्सायकान्क्षिपेत् ॥ ६ ॥

दक्षिणं स्वस्तिकाकारं वामं दर्दुरवत्पदम् ।
आसनं मृगयायोग्यं कुर्यात्स्वस्तिकदर्दुरम् ॥ ७ ॥

१ D F यन्नू । २ D ष्ठ । ३ A के । ४ A त्र । ५ D पार्श्वाभ्यामंघ्रि । ६ A त्सा । ७ A त्क्षिं ।

आपीड्य भूमिं जानुभ्यामासनं जानुपीडं[1]नम् ।
अनुत्ताने[2]ऽथवोत्ताने शयने शयनासनम् ॥ ८ ॥

धृतचापस्य हस्तस्य तर्जनी प्रोन्नता यदि ।
तुङ्गो[3] मुष्टिः[4] समाख्यातः सत्युत्ताने शरासने ॥ ९ ॥

दक्षिणाग्रं [5]यदा चापं तिर्यक् प्रणिहितं भवेत् ।
उन्नतायां कनिष्ठायां मुष्टिः स्यादुपतुं[6]ङ्गकः ॥ ११० ॥

अङ्गुष्ठमुन्नतं कुर्यान्मुष्टौ तं(ष्टिः सः)परिमण्डले(लः) ।
गुलिकादिव्यचे(धे)तस्य विनियोगं प्रदर्शयेत् ॥ ११ ॥

तर्जन्यङ्गुष्ठयोरग्रे अन्योन्यं परिचुम्बतः ।
मुष्टिः समधृतो[8] नाम स्थूले धनुषि दृश्यते ॥ १२ ॥

तलेनाक्रम्यते चापं दृढा[9]कर्षण[10]कर्मणि ।
मुष्टिस्तलाश्रयो नाम बलिनां सम्प्रदर्श्यते ॥ १३ ॥

अङ्गुल्यस्तु[11] समाश्लापे यस्मिन्नङ्गुष्ठ[12]पीडिताः ।
[13]सममुष्टिः स[14] विज्ञेयो दृढघाते प्रशस्यते ॥ १४ ॥

एवं प्रयोगभेदेन चापे मुष्टिं तु षड्विधाम् ।
प्रयोजयेत्क्रियाकाले चापविद्याविशारदः ॥ १५ ॥

अङ्गुष्ठपीडितं कुर्यात्तर्जनीनखरं त...
[15]अङ्गुलीत्रितयं स्थाप्यं मुष्टिः स्यात्सिंहकर्णिका(कः) ॥ १६ ॥

सिंहकर्णिकमुष्टौ च तर्जनी चेत्प्रसारिता ।
पताको नाम मुष्टिः स्यान्नलिकास्थ(स्थू)लकाण्डके ॥ १७ ॥

अङ्गुष्ठनखपृष्ठे च तर्जनीनखरो भवेत् ।
अधोवर्तिभ(र्ती भ)वेन्मुष्टिः शेषाङ्गुल्योऽत्र पूर्ववत् ॥ १८ ॥

तर्जन्यङ्गुष्ठयोरग्रे श्लिष्टे चेत्पूर्ववत्पु[16]रा(रः) ।
मुचुटी[17](टी) सूक्ष्मनाराचव्य[18]धे मुष्टिः प्रशस्यते ॥ १९ ॥

१ D डित। २ A ते। ३ A ङ्गा। ४ A ष्टिः। ५ A ता। ६ D प। ७ D रु। ८ A तौ। ९ A मा। १० A क। ११ D श्च। १२ A पाटि। १३ A स मुष्टिः। १४ A सम। १५ D ल। १६ D तरा। १७ D चढी। १८ D व्याध।

तर्जन्यावेष्टिताङ्गुष्ठ(:) शेषाः पाणितले स्थिता(:)।
वज्रमुष्टिरियं ख्याता दृढकर्मणि कोविदैः ॥ १२० ॥

पुङ्खस्यो[1]र्ध्वमधः स्याच्चेत्तर्जनी[2] मध्यमा स्थिताः(ता) ।
तथा पुङ्खमुखेऽङ्गुष्ठो[3] मुष्टिस्त्रै[4]यम्ब[5]को मतः ॥ २१ ॥

तर्जनीमध्यमामध्ये यत्र[6] पुङ्खः प्रपीड्यते ।
अनामिकासमायोगान्मुष्टिः स्यादेकलव्यकः ॥ २२ ॥

त्र(त्रै)यम्बकैकलव्यौ द्वौ तिर्यक्कोदण्डमार्गणे ।
एवं सप्तविधं मुष्टिं कुर्यान्नानाविधे व्य[7]धे ॥ २३ ॥

आकृष्टसायकं मुष्टिं कर्णाग्रस्योर्ध्व[8]मङ्गुले ।
विन्यस्य दर्शयन्सो(येत्सो) ऽयं कैशिकं नीचै[9]वेधने ॥ २४ ॥

कर्णाग्रचुम्बितं मुष्टिं कृत्वा सायकपीडनम् ।
सात्वतं दर्शयन्सो(येत्सो)ऽयं पूर्ववन्नीचै[10]लक्ष(क्ष्य)के ॥ २५ ॥

कर्णनाभिसमं मुष्टिं कृत्वा मार्गणगर्भितम् ।
वार्षगण्यं(वत्सकर्ण) प्रयुञ्जीत सोऽयं लक्ष्ये समं(मे) नृपः ॥ २६ ॥

अधस्तात्कर्णरन्ध्रस्य मुष्टिमेकाङ्गु[11]ले स्थिरम् ।
विन्यस्य भरतं सोयं समे लक्ष्ये प्रदर्शयेत् ॥ २७ ॥

अपरे बाहुशिखरे मुष्टिं कृत्वा समार्गणम् ।
उच्चे दूरे तथा लक्ष्ये छन्दन्यायं(स्कन्धन्यासं) प्रदर्शयेत् ॥ २८ ॥

उरःसमं समं लक्ष्यं मनुष्योत्से[12]धमानतः ।
तदूर्ध्वमुच्चं(च्चं) लक्ष्यं स्यात्तदधो नीचमुच्यते ॥ २९ ॥

शुष्क[13]चर्मशतं गव्यमहोरात्रं जले स्थितम् ।
षोडशाङ्गुलविस्तीर्णं दृढं बद्धं च रज्जुभिः ॥ १३० ॥

इदं चर्म दृढं प्रोक्तं गजचर्मसमं बुधैः ।
एवं विंशतिरश्व[14]स्य चर्माण्यष्टौ नरस्य तु ॥ ३१ ॥

---

१ D स्यार्ध । २ A ना । ३ A ष्ठौ । ४ A न्त । ५ A न्त्र । ६ D व । ७ A घ्व । ८ A व
९ A मा । १० F व । ११ A ङ्गलो । १२ A ध्येत्सो D ध्येत्से । १३ A व । १४ A श्व ।

एवं सर्वदृढानां हि गजवाजिनृणां क्रमः ।
कथितः सोमभूपेन जामदग्न्यमतानुगः ॥ ३२ ॥

षड्विंशदङ्गुलां[1] भस्त्रां छागमांसेन पूरयेत् ।
एतन्मांसं दृढं विध्येद्गजकायप्रमाणकम् ॥ ३३ ॥

गंजरा[2](जाजा)श्वखुराघातैः समन्तात्परिशो[3]षितः(तम्) ।
दृढमश्वखुरं नाम मध्ये मातङ्गमान(ज)कम् ॥ ३४ ॥

विषाणं[4] सप्तवर्षस्य महिषस्य प्रगृह्य च ।
मूलाग्रवर्जितं मध्ये द्विपकायसमं दृढम् ॥ ३५ ॥

सूत्रं पञ्चाङ्गुलोत्सेधं तिर्यगा[5]मा(या)मकल्पितम् ।
निबिडं चर्मणा बद्धं विध्येत्[6]करिसमं दृढम् ॥ ३६ ॥

कूर्मपृष्ठकपालं तु हस्तविस्तारवर्तुलम् ।
विध्येदस्थि दृढं नाम कुञ्जराङ्गप्रमाणकम् ॥ ३७ ॥

षड्विंशदङ्गुलं स्थौल्याद्वा[7]ल्कजङ्गन(जाङ्गल) पिण्डितम्[8] ।
रज्जुभिर्वेष्टितं विध्येदिभगात्रे[9]समं दृढम् ॥ ३८ ॥

अङ्गुलं दारुसारं तु षोडशाङ्गुलविस्तृतम् ।
इदं दारु दृढं विध्येद्दन्तिदेहसमं नृपः ॥ ३९ ॥

भ्रमत्कुलालचक्रस्थं मृदः पिण्डं नवाङ्गुलम् ।
दृढं प्रवाह(विहि)तं विध्येत्समं नागेन चर्मणा ॥ १४० ॥

कार्पासनिर्मितं पुञ्जमुत्सेधेन षडङ्गुलम् ।
चर्मनद्धं दृढं विध्येत्सिन्धुं[10]राङ्गसमं नृपः ॥ ४१ ॥

करीषधान्यपांसूनां पृथक्पर्णं तु कर्कट(श)म् ।
अष्टाङ्गुलं दृढं विध्येद्वारणाङ्गसमं नृपः ॥ ४२ ॥

द्व्यङ्गुलां मांसवर्णां च षोडशाङ्गुलविस्तृताम् ।
शिलां विध्येद्दृढं सम्यक् स्तम्बेरमसमं नृपः ॥ ४३ ॥

१ F ट्विं । २ A जराजाश्वखुरोवातैः । ३ D शे । ४ A णां । ५ D ह्यते । ६ D गगमक ।
७ D दाह्व । ८ A ण्ड । ९ F त्रे A त्रं । १० D न्धू A द्धू ।

षोडशाङ्गुलविस्तीर्णमुत्सेधे सर्षपास्त्रयः ।
आयसं दृढमेतत्तु विध्[1]येत्सामजसन्निभम् ॥ ४४ ॥

दृढान्येतानि बध्नीयात्स्तम्भशाखाद्वयान्तरे ।
त्रिवारप्रमिते[2]नैव नरवक्षःसमुन्नतौ ॥ ४५ ॥

भित्वा तानि विनिर्गत्य निर्भिद्याग्रेण भूतलम् ।
यथावत्तिष्ठते बाणस्तथाविध्येत्क्रियायुतः ॥ ४६ ॥

अङ्गुष्ठभागपार्श्वे[3] तु तर्जन्यां[4] सङ्गते शरे ।
चापमुष्टौ समे पुङ्खे सम[5]सन्धानमुच्यते ॥ ४७ ॥

समसन्धो[6] रथे ज्यायामधःसन्धानकं भवेत् ।
तस्मादेवोर्ध्वतः सन्धादूर्ध्वसन्धानमिष्यते ॥ ४८ ॥

ऊर्ध्वदूरस्थिते लक्ष्ये नीचसन्धानसङ्गतिः ।
नीचलक्ष्ये तथा चोर्ध्वे समलक्ष्ये समं भवेत् ॥ ४९ ॥

षोडशाङ्गुलवृत्तं तु स्थूलं लक्ष्यमुदाहृतम् ।
अङ्गुलद्वितयं सूक्ष्मं पञ्चगुञ्जांशिरोरुहम् ॥ १५० ॥

शब्दे[11]नानुमितं[12] लक्ष्यं परापरमुदाहृतम् ।
[13]चलं पञ्चविधं लक्ष्यं दर्शयेत्तस्य वेधने ( नम् ) ॥ ५१ ॥

तिर्यग्धावंस्तथा गच्छन्भ्राम्यंश्चैव तथोत्पतन् ।
आकाशे भूतले तोये तेषां स्थानमुदाहृतम् ॥ ५२ ॥

उत्तमं द्विशतं प्रोक्तं शतं सार्धं तु मध्यमम् ।
विंशं शतं कनिष्ठं स्याद्दूरे धन्व[14]न्तरे क्षितौ ॥ ५३ ॥

धर्षयेदुत्तमं दूरं चतुर्भिः सायकैः शनैः ।
समपत्रैः स्थूलसूक्ष्मैः निः[15]पत्रैश्चैव नागरैः ॥ ५४ ॥

पाते त्वेकं करे त्वेकं गगने पञ्चसायकान् ।
दर्शये[16]ल्लाघवन्त्वेवं विध्यँल्लक्ष्यं महीपतिः ॥ ५५ ॥

---

१ D वेध्ये । २ D तेन । ३ A श्वे । ४ D न्यां । ५ D मं । ६ D न्धौ । ७ F द्याव्या । ८ A वोद् । ९ A स्थ । १० A ञ्जांशिरोसहां । ११ A ष्टे । १२ D ते । १३ A व । १४ D ध्वा । १५ D पत्रैश्चैव च । १६ A [illegible] ।

चतस्रः सम्पदस्त्वे[2]ता युद्धे शत्रु[3]निबर्हणे ।
मृगयायां विनोदेन सोपयोगा महीपतेः ॥ ५६ ॥

चित्रं कु[4]तूहलकरं प्रेक्षकाणां मनोहरम् ।
दर्शयेत्तदपि मौढ्या विनोदाय महीपतिः ॥ ५७ ॥

स्तम्भस्योपरिविन्यस्तचक्रयन्त्रे सुकीलितम् ।
वायुप्रेरितपत्रैस्तु भ्राम्यमाणं द्रुतं [5]झषम् ॥ ५८ ॥

पात्रमध्ये स्थिते तोये वीक्ष्य[7] विध्यन्विलोचने ।
प्रत्यालीढस्थितो राजा राधावेधं प्रदर्शयेत् ॥ ५९ ॥

खर्जूरीसदृशाकारं कृत्वा दारुमयं तरुम् ।
नाराचैः शतशो विध्येत्स्थाने कण्टकपत्रयोः ॥ १६० ॥

[8]पत्राणां(णि)कण्टकांश्चैव सायकैरेव कल्पयेत् ।
खर्जूरीवेधनं चित्रं प्रेयसीनां प्रदर्शयेत् ॥ ६१ ॥

वृषलं सम्मुखं कृत्वा पत्रं वक्षसि विन्यसेत् ।
तदेव तिर्यग् मोक्षेण बाणपुङ्खेन धारयेत् ॥ ६२ ॥

पत्रच्छेदमिदं चित्रं चित्तभ्रान्तिकरं नृणाम् ।
रसं[10] विस्मयसातन्वन्दर्शयेद्वेधमुत्तमम् ॥ ६३ ॥

एकसन्धानयुक्ताभ्यां बाणाभ्यां लक्ष्ययुग्मकम् ।
[11]विध्यन्प्रदर्शयेच्चित्रं यमलार्जुनसंज्ञकम् ॥ ६४ ॥

अत ऊर्ध्वं स्थितं लक्ष्यमेकमोक्षेणं[12] बाणयोः ।
विकटार्जु[13]नके(कं)चित्रं नृपो[14] विध्यन् विनोदयेत् ॥ ६५ ॥

अर्धचन्द्राकृतीं कृत्वा तर्जन्यङ्गुष्ठकौ ततः ।
तृणकाण्डं[15] तयोरग्रे[16] धारितं चतुरङ्गुलम् ॥ ६६ ॥

अङ्गुल्यनुपपा[17]तेन तद्विध्यन्पृथिवीपतिः ।
अर्धचन्द्राह्वयं चित्रं दर्शयेच्च सभासदाम् ॥ ६७ ॥

१ A प । २ A स्वे । ३ A त्र । ४ D कौतू । ५ D हस्ते । ६ A रु । ७ A मध्ये वीक्ष्यन्वि । ८ D य । ९ D ट । १० D स । ११ D विविधं । १२ A क्षण । १३ A र्जं । १४ A पे । १५ A ०डे । १६ D प्र । १७ A द्या ।

सन्धतः[1] सायकस्त्वेको द्वितीयः सम्मुखः स्थितः।
द्वावेतावेकमोक्षेण[2] पुरः पश्चाच्च गच्छतः ॥ ६८ ॥

पूर्वापरस्थितं लक्ष्यं प्रविध्यन्नवनीपतिः।
मालाविद्याधरं चित्रं दर्शयेच्चित्रवेष्टितम् ॥ ६९ ॥

चतुर्भिरधिकाशीतिश्चित्राणामवनीभुजा।
इत्थं प्रदर्शनीया[3] स्यौ[4]द्वौ[5]पश्चाशच्च तु(दु)ष्करा ॥ १७० ॥

दृढलक्ष्ये तथा दूरे लाघवे चित्रकर्मणि।
एवं लक्षणसंयुक्तां धनुर्विद्यां प्रदर्शयेत् ॥ ७१ ॥

ततोऽष्टारं समादाय चक्रं षडरमेव[6] वा।
मुष्टिभिः[7] सिंहकर्णाद्यैर्लक्ष्यं हन्यान्महीपतिः ॥ ७२ ॥

ईषत्कुञ्चिततर्जन्यां[8] भ्रामयेद्वामदक्षिणम्।
उत्क्षिप्योत्क्षिप्य वेगेन पञ्च सप्त प्रधारयेत् ॥ ७३ ॥

एवं प्रदर्शयेच्चित्रं चक्रचारविचक्षणः।
ततः कुन्तं समादाय तदुत्कर्षं प्रदर्शयेत् ॥ ७४ ॥

सप्तारत्निर्भवेद्भूमौ षडरत्निस्तु वाजिनि।
वारणे[9] च नवारत्निः कुन्तदण्डास्त्रयः स्मृताः ॥ ७५ ॥

त्रिशूली जर्जरो जीर्णो व्रणकोशसमन्वितः।
स्थूलग्रन्थिः कृशग्रन्थिर्दूरपर्वभिरायतः ॥ ७६ ॥

एवंविधेन दण्डेन युक्तं कुन्तं विवर्जयेत्।
सदोषं विघ्नकारित्वात्कुन्तकर्मणि निन्दितम् ॥ ७७ ॥

निष्कोशः संरणः[10] शुद्धः पक्कवेणुः स(सु)भूमिजः।
कुन्ते प्रशस्यते दण्डः सर्वकार्यस्य साधकः ॥ ७८ ॥

फलमग्रे भवेदेकविंशत्यङ्गुलमानतः।
अङ्कुशेन फलस्याधो[11] युक्तः पृष्ठे च कर्तरी ॥ ७९ ॥

१ D न्धि F न्धे। २ A क्षोण। ३ A दर्शनीया। ४ D स्युः। ५ F द्वि। ६ A ०ड। ७ F omits these two lines। ८ A न्यां। ९ F omits these two lines। १० D श। ११ A हे।

अंशनिर्मूलदेशे स्यादायसो मुकुलाकृतिः ।
ईदृक्षो वा(क्षः पा)तिकः कुन्तः फलमात्रस्तु वाजिनि ॥ १८० ॥

पदातिकुन्तवत्कुन्तो दीर्घत्वेन विशेषतः ।
गजारूढेन सन्धार्यः समराङ्गणमूर्धनि ॥ ८१ ॥

भूमिकुन्तं समादाय दक्षिणेन च पाणिना ।
अंशनेरग्रतो हस्तमात्रेऽनुत्तानमुष्टिना ॥ ८२ ॥

वितस्तित्रितयं त्यक्त्वा वामेनोत्तानमुष्टिना ॥
सङ्गृह्य कुन्तं जाते(न) स्थानकेन चरेल्लघु ॥ ८३ ॥

चालयन्मणिबन्धेन कङ्कणावर्तमाचरेत् ।
स्कन्धे चावर्तयन् कुन्तं कण्ठावर्तं प्रदर्शयेत् ॥ ८४ ॥

पृष्ठे च भ्रामयेत् कुन्तं पृष्ठावर्तं निदर्शयेत् ।
कक्षायां च तथावर्तं तर्जन्यां तु तदान्वयम् ॥ ८५ ॥

यत्र यत्र प्रदेशे तु भ्रामयेत्कुन्तमुत्तमम् ।
तत्तन्नाम्ना तमावर्तं दर्शयेत्कुन्तकोविदः ॥ ८६ ॥

फलेन दर्शयेदाशां परवेधात्मिकां नृपः ।
अङ्कुशेन विकर्षाशां कर्तर्यां धारणात्मिकाम् ॥ ८७ ॥

विनैनाशा(नाशाशा)मशन्यां च दर्शयेत्कुन्तकोविदः ।
इति कुन्तविनोदेन रञ्जयेत समागतान् ॥ ८८ ॥

गदां लोहमयीं कुर्याद्दारुसारमयीं तथा ।
घनेन निर्मितां वापि रत्नकाञ्चनभूषिताम् ॥ ८९ ॥

स्थूलोदरीं च स्थूलाग्रां समदन्तां परां शुभाम् ।
प्रगृह्य मूलदेशे तु खड्गवद्दृढमुष्टिना ॥ १९० ॥

भ्रामयेत्करयुग्मेन करेणैकेन वा पुनः ।
विचरेन्मण्डलैश्चित्रैः सव्यैश्चैवापसव्यकैः ॥ ९१ ॥

---

१ A अं। २ A द। ३ D अंशेन चा A अंशनेर। ४ D पाणि। ५ D तेछा स्था A तेस्था ६ A ष। ७ D प्रद। ८ F वूर्तं। ९ D त्व। १० A र्तव्या। ११ D वन। १२ D शू। १३ D तापरां। १४ A गृह्य मूलप्र। १५ D ले चि।

गतागतैश्च गोमुत्रैरुत्प्लुतुत्प्लु(प्लवन्नुत्प्लु) तैरपि ।
पातयन्परघातांश्च प्रहाराशाश्च दर्शयेत् ॥ ९२ ॥

उपन्यस्तैरपन्यस्तैरावर्तपरिवर्तनैः ।
दर्शयेत्तु गदाविद्यां विनोदाय महीपतिः ॥ ९३ ॥

नीराज्यमानो राज्ञीभिः स्तूयमानश्च वन्दिभिः ।
कविभिर्वर्ण्यमानश्च गीयमानश्च गायकैः ॥ ९४ ॥

आशीर्भिर्वर्धमानश्च जयजीवेतिवादिभिः ।
पुरोधःप्रमुखैर्विप्रैर्नन्दवर्धस्त्रभाषितैः ॥ ९५ ॥

प्रणम्यमानो भूपालैर्बद्धाञ्जलिपुटैर्नरैः ।
भजेत्प्रमोदं भूपालः शस्त्रविद्याविनोदनैः ॥ ९६ ॥

शस्त्रविद्याविनोदोऽयं कथितः सोमभूभुजा ।

इति शस्त्रविद्याविनोदः ॥ १ ॥

अथ शास्त्रविनोदोऽयं विविधः परिकीर्त्यते ॥ ९७ ॥

देवता विधिनाभ्यर्च्य विप्रान्सन्तोष्य दानतः ।
निव(र्व)र्त्य राजकार्याणि क्षुत्काले विहिताशनः ॥ ९८ ॥

सभामण्डपमध्यस्थः समासीनः शुभासने ।
विनोदाय कवीन्प्रौढान् गायकान् वादिनस्तथा ॥ ९९ ॥

वाग्मिनः पण्डितान् प्राज्ञान् सर्वशास्त्रविशारदान् ।
समाहूय नृपस्तैस्तैरागतैः परिवेष्टितः ॥ २०० ॥

यथोचितासनासीनैराशीर्भिरभिनन्दितः ।
प्रसन्नकान्तया दृष्ट्या तान् सर्वानवलोक्य च ॥ १ ॥

तत्र शब्दकलादक्षान्निसर्गप्रतिभान्वितान् ।
रत्नत्रयकृताभ्यासान् सर्वव्यापारकोविदान् ॥ २ ॥

१ D त्योत्प्लुत्य । २ D तैस्तान् । ३ A थ । ४ A ता । ५ A चा । ६ A ध । ७ A गम ।

उत्पादकांश्च भावज्ञांश्छन्दो[1]विचितिपारगान् ।
मधुरान् काव्यतत्वज्ञान् सर्वभाषाविशा[2]रदान् ॥ ३ ॥

आज्ञापयेत्कवीन्राजा का[3]व्यं पठत सुन्दरम् ।
पठ्यमाने ततः काव्ये गुणान् दोषान् विचारयेत् ॥ ४ ॥

शब्दाः शरीरं काव्यस्य प्राणोऽर्थः परिकीर्तितः ।
अलङ्कारास्तदा[4]ऽऽकारा(रः) रसा भावाश्च चे[5]ष्टिताः(तम्) ॥ ५ ॥

छन्दोऽस्य पदसञ्चारो नानाप्रकृतयस्तथा ।
शब्दविद्यास्यै[6] ममैं[8]तैः काव्यदेवस्य रम्यता ॥ ६ ॥

महाप्राणाक्षरं श्लिष्टं[7] मिथश्च श्लिष्टवर्णकम् ।
प्रसिद्धार्थपदाख्यातं प्रसाद इति कथ्यते ॥ ७ ॥

प्रारब्धमार्गनिर्वाहः समता परिकीर्तिता ।
शब्दार्थौ कर्णसुखदौ माधुर्यं तत्प्रवं[9]क्ष(क्ष्य)ते ॥ ८ ॥

अक्षराणां च लालित्यं सौकुमार्यं विदुर्बुधाः ।
निरपेक्षार्थवाचित्वमर्थव्यक्तिरुदाहृता ॥ ९ ॥

शस्तैर्विशेषणैर्युक्तै[10]रौदार्यमभिधीयते ।
ओजः समासबाहुल्यं विकटाक्षरसन्धि वा[11] ॥ २१० ॥

लोकानुसारि सम्भा[12]व्यं कथनं कान्तिरिष्यते ।
समाधिरन्यधर्मश्चेदन्यत्र[13] प्रतिपद्यते ॥ ११ ॥

दोषलेशै[14]रसंस्पृष्टा गुणैः[15] सर्वैरलङ्कृता ।
वैदर्भी कथिता रीतिः श्रवणै[16]श्रव्यकारिणी ॥ १२ ॥

समस्तै[17]रुद्भटैः शब्दैरोजःकान्तिगुणान्वितैः ।
गौडीया नाम सा प्रो[18]क्ता रीतिः काव्यविचक्षणैः ॥ १३ ॥

---

१ D न्दःशास्त्रविशारदान् । २ D तिपारगान् । ३ A स्वकाव्यं पठयतामसौ । ४ A था । ५ D वे । ६ D न्त आख्यातः । ७ A ष्टे । ८ F थैं । ९ A च । १० D क्तैः । ११ D F च । १२ A व्य । १३ D तः । १४ A खैः । १५ A णाः । १६ A णः । १७ A टा । १८ A यु ।

ईषत्श्लै[१]वैः(श्लथैः)पदैर्युक्ता[२] पुराणच्छायया युता ।
मधुरा सुकुमारा च पाञ्चाली[३] रीतिरिष्यते ॥ १४ ॥

विषमं च[४] समं चैव तथैवार्धसमं भवेत् ।
एवं त्रिविधमाख्यातं वृत्तं छन्दोविशारदैः ॥ १५ ॥

एकाक्षरात्समारभ्य यावत्षड्विंशतिं[५] गताः ।
एकैकाक्षरसंवृद्ध्या पादाः स्युश्छ[६]न्दसां विदुः ॥ १६ ॥

ऊर्ध्वं ततः समाँ[७]दिष्टाश्चण्डवृ(वृ)ष्ट्यादिदण्डकाः ।
तच्छेषं क[८]थिता गाथाः पादैः षड्भिस्त्रिभिस्तथा ॥ १७ ॥

तत्रोक्ता प्रथमात्युक्ता द्वितीया मध्यमा ततः ।
प्रतिष्ठा सुप्रतिष्ठा च गायत्र्युष्णिगनुष्टुभा(भः) ॥ १८ ॥

बृहती च तथापङ्क्तिस्त्रिष्टु[९]प् च जगती[१०] परा ।
तथातिजगती[११] शक्वर्यन्या[१२] स्यादतिशक्वरी ॥ १९ ॥

अष्टिरत्यष्टिरुद्दिष्टा धृतिश्चातिधृतिः स्मृता ।
[१३]कृतिश्च प्रकृतिश्चैवमाकृतिर्विकृतिर्मता ॥ २० ॥

सङ्कृ[१४]त्यभि(ति)कृती स्यातामुत्कृतिश्चरमा भवेत् ।
इति संज्ञाः समाख्याताश्छन्दसां पूर्वसूरिभिः ॥ २१ ॥

मकारस्त्रिगुरुर्ज्ञेयो नकारस्त्रिलघुर्मतः ।
आदौ गुरुर्भका[१५]रः स्यात्सकारे गुरुरन्ततः ॥ २२ ॥

मध्ये गुरुर्जकारः स्याद्रका[१६]रो लघुमध्यकः ।
आदौ लघु[१७]र्यकारः स्यात्तकारोऽन्त्ये[१८]लघुर्मतः ॥ २३ ॥

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलघु(ग)क्रिया ।
संख्या चैव तथा द्वाव(चैवाध्वयोगश्च)प्रत्ययाः षडुदाहृताः ॥ २४ ॥

---

१ D श्लाघैः । २ A क्तैं । ३ A ला । ४ D समता । ५ A विर्ति । ६ A श्च । ७ A मुद्दि । ८ A कवितार्गन्धाः । ९ A त्रिष्टुप्र । १० A च जग । ११ A ता । १२ A न्य । १३ F वृ । १४ A संस्कृ । १५ D रे A रं । १६ A को मध्यलघु ( F घुः ) स्मृतः । १७ A र्घेयकारे । १८ A न्य ।

एकदेशेन सादृश्यं बहुसादृश्यमेव वा[1] ।
यत्र प्रतीयते काव्ये सोपमेति निगद्यते ॥ २५ ॥

सा चापि द्विविधा प्रोक्ता पदवाक्यार्थभेदतः ।
तत्रोदाहरणं वक्ष्ये पृथक् पृथगिदं यथा ॥ २६ ॥

पदार्थोपमा यथा ।

इन्दुबिम्बसमानेन वदनेन कृशो[2]दरी ।
आह्लादयति[3] चित्तं मे कुम्भिकुम्भोन्नतस्तनी ॥ २७ ॥

वाक्यार्थोपमा यथा ।

वक्ष(क्षः)स्थले विलसता मुक्ताहारेण राजते[4] ।
सुमेरुरिव गाङ्गेन प्रवाहेण नराधिपः ॥ २८ ॥

उपमेयं(ये) समारोप्य कथ्यते यत्र वस्तुनि ।
उपमानं तदा[5] ख्यातं रूपकं पूर्वसूरिभिः ॥ २९ ॥

पुष्पचापस्य तन्वङ्गी परमास्त्रं जगज्जये ।
मनो हरति लोकस्य लावण्यरसदीर्घिका ॥ २३० ॥

समादाय च सादृश्यमन्यस्यान्यत्र भावनात् ।
उत्प्रेक्ष(क्ष्य)ते हि[6] यद्वस्तु तामुत्प्रेक्षां प्रचक्षते ॥ ३१ ॥

मधु(म)वैरि(री)विधुस्तन्वि त्वया वक्त्रेण निर्जितः ।
इतीव सेवते पादौ पद्म[7]कान्ती मृगीदृशः ॥ ३२ ॥

वक्तुं किञ्चिदुपक्रम्य निषेध इव तस्य यः ।
उत्कर्षापादनायासावाक्षेपः कथितो बुधैः ॥ ३३ ॥

तस्याः(स्या)स्तव वियोगोत्थं तापं प्राणान्तकं शृणु ।
न[8] वक्ष्ये त्वं दया[10]हीनः परदुःखसुखी यतः ॥ ३४ ॥

गन्तु[11]मिच्छसि चेद्गाढं गच्छ कान्त यथासुखम् ।
मम यद्भावि तद्भावि[9] नामङ्गल्यं ब्रवीम्यहम् ॥ ३५ ॥

१ F च । २ A शे । ३ F सि । ४ F से । ५ A तथा । ६ D च । ७ A द्मा । ८ D द्रुवः ।
९ D तद्ग । १० A यदाहीनः । ११ A न्त ।

उद्वर्तयामि गौराङ्गि चन्दनेन किमाननम्।
निसर्गमधुरस्यास्य मण्डनेयं विडम्बना ॥ ३६ ॥

रूपं शब्दश्च गन्धश्च रसः स्पर्शक्रियागुणाः[1]।
द्रव्यं च वर्ण्यते यत्तु स्वभावोक्तिरसौ मता ॥ ३७ ॥

सर्वाङ्ग[2]पाण्डुरैः पिच्छैश्चञ्च्वा च कनकत्विषा।
हरिद्रापिञ्जरैः पादै राजहंसो विराजते ॥ ३८ ॥

इति रूपम्।

अथ शब्दः

वीणाया निष्कलो नादो मधुरः श्रुतिशोभनः।
कस्य नो हरते चेतो मृगीमपि वशं नयेत् ॥ ३९ ॥

इति शब्दः।

अथ गन्धः

अन्येभगन्धमाघ्राय दिशो जिघ्रति वारणः।
अत्यर्थं क[3]रमु[4]त्क्षिप्य कोपारुणितलोचनः ॥ २४० ॥

इति गन्धः।

अथ रसः

विशालायाः फलं रम्यं लोभादास्वाद्य सत्वतः।
व्यादाय वदनं मूढो धुनीते मर्कटः शिरः ॥ ४१ ॥

इति रसः।

अथ स्पर्शः

पीनवृत्तघनोत्तुङ्गस्तनस्पर्श[6](र्शि) करोत्पलम्।
तन्वङ्ग्या[7] मानसं यूनां लज्जाधैर्यविवर्जितम् ॥ ४२ ॥

इति स्पर्शः।

---

१ A णः। २ A ङ्गं। ३ D कि। ४ A म। ५ A स्वः। ६ D र्शः। ७ A ङ्ग्यां। ८ A ज्ज।

अथ क्रिया

ऊर्ध्वरोमा श्लथं[1]श्रोत्रः पुच्छं कुण्डलतां नयन् ।
कामुकः पृष्ठमारोहन् हरिणीमनुधावति ॥ ४३ ॥

इति क्रिया ।

अथ गुणः

घनगर्जितमाकर्ण्य घनदानविभूषितः ।
घनवारिमदस्रावी गजोऽयं मदगर्[2]जनः ॥ ४४ ॥

इति गुणः ।

अथ द्रव्यम्

अतसीपुष्पसङ्काशः पद्मपत्रायतेक्षणः ।
शङ्खचक्रगदापाणिर्दृश्यते गरुडध्वजः ॥ ४५ ॥

इति द्रव्यम् ।

गुणजातिक्रियाद्रव्यवाच्यैक[3]त्र स्थितं पदं[4]म् ।
सर्वैः सम्बध्यते वाक्यैर्दीपकं तत्प्रच[5]क्षते ॥ ४६ ॥

श्वेतिमा दृश्यते शङ्खे क्षीराम्भोधौ सुधाकरे ।
दिग्दन्तिदशने कुन्दे यशःसु[6] तव भूप[7]ते ॥ ४७ ॥

भद्रो नगेन्द्रः कुरुते स्वामिनो जयसम्पदम् ।
मदयत्यूर्जितं राज्यं रिपूनाभिभवत्यसौ ॥ ४८ ॥

कुरुते तत्र सङ्गीतं तद्विदां चित्तरञ्जनम् ।
कामिन्या मन्मथोल्लासं सन्तापं च वियोगिनाम् ॥ ४९ ॥

विष्णुना निर्जिता दैत्याः सुरास्त्राता महात्मना ।
योगिनः प्रापिता मोक्षं जनो जगति मोहितः ॥ २५० ॥

दीपक(कं)श्लोकमध्ये तु श्लोकस्यान्ते च दीपकम् ।
गुणजातिक्रियाद्रव्यसंज्ञिं ज्ञेयं विचक्षणैः ॥ ५१ ॥

पदमावर्तते यत्र भिन्नभिन्नार्थवाचि य[11]त् ।
आवृत्तिर्नाम सा ज्ञेया वचो [12]व्युत्पत्तिकारिणी ॥ ५२ ॥

---

१ A थः । २ A गर्जिनी । ३ F च्यते । ४ A दाम् । ५ A चते । ६ A स्तु । ७ A य
८ A त्र । ९ A य । १० A ङ्गी । ११ A यन् । १२ D वैत्यप ।

क्षीरेण नीरं घटते सद्भिः सन्तो मिलन्ति च ।
चक्राह्वाश्चक्रवाकीभिः सङ्गच्छन्ते दिनागमे ॥ ५३ ॥

पुष्पितां रचयत्येष वनमालीं मधूत्सवः ।
पुष्पितां कुरुते तन्वीं नवयौवनसङ्गमः ॥ ५४ ॥

विधेयार्थस्य सिद्ध्यर्थं[3] सामर्थ्यादन्यार्थभी(भा)पणम् ।
सोऽयमर्थान्तरन्यासः कथितः सोमभूभुजा ॥ ५५ ॥

पक्वाम्रकदलीद्राक्षाफलाढ्येऽपि वने वसॅन् ।
करभः कण्टकान्वाञ्छत्यधमो ह्यधमप्रियः ॥ ५६ ॥

उक्त्वा सादृश्यमन्योऽन्यमुपमानोपमेययोः ।
उपमेयस्य भेदोक्तिर्व्यतिरेकः स्मृतो बुधैः ॥ ५७ ॥

सुवंशजो गुणयुतो निर्जितारातिमण्डलः ।
दत्तपृष्ठो रणे चापस्त्वं पुनः सम्मुखः सदा ॥ ५८ ॥

प्रतीतकारणत्यागाद्यत्र कार्यमुदीर्यते ।
हेत्वन्तरात्स्वभावाद्वा सेयमुक्ता विभावना ॥ ५९ ॥

दिग्वधूमुखमाभाति विना चन्दनचर्चया ।
अतीवपाण्डुरच्छायं सान्द्रं चन्द्रमरीचिभिः ॥ ६० ॥

दोषेष्वशिक्षितैः सद्भिः कदाचिन्न प्रदुष्यते ।
कलुषं[10] साधुवृत्तेषु तथापि खलु मानसम् ॥ ६१ ॥

इष्टमर्थमनुक्त्वा(क्त्वा)[11]न्यैः साभिप्रायैर्विशेषतः(णैः) ।
यदुच्यते समासेन सा समासोक्तिरिष्यते ॥ ६२ ॥

ऋजुभिः सफलैः सार्धे(र्थै)[12]र्गुणसङ्गमशालिभिः ।
पत्रिभिः सङ्गतो हन्ति वक्र[13]श्चापः[14] पुरस्थितम् ॥ ६३ ॥

अर्थस्य[15] प्रतिपाद्यस्य यः सम्भाव्यः प्रदर्श्यते[16] ।
उत्कर्षोऽतिशयोक्तिः[17] स्यात् सोऽलङ्कारः कविप्रियः ॥ ६४ ॥

१ A ली । २ A न्वीं । ३ D द्धार्थात् । ४ D ध्यादन्यत्रभा । ५ D सेत् । ६ A क । ७ A गोह्य । ८ A दा । ९ A व । १० A खं । ११ A धर्ममु । १२ D साधैः । १३ F च । १४ A पं । १५ A ध । १६ D दृश्य । १७ A तिस्यात् ।

मम प्रियावियोगोऽयं रसायनमिवाभवत् ।
नैयामि दिवसन्त्वेकं वर्षाणामयुतैः समम् ॥ ६५ ॥

स्थितयोरेकशय्यायां दम्पत्योर्मानिनो रुषा ।
वितस्तिमात्रमप्यासीदन्तरं शतयोजनम् ॥ ६६ ॥

विशेषणैर्हेतुभूतैर्विशेषो यत्र मन्यते ।
अलङ्कारः स कथितो हेतुर्नाम विचक्षणैः ॥ ६७ ॥

निःशेषितरिपोर्दातुर्धर्मज्ञस्य दयावतः ।
तवैवं रमणीनाथ जगत्येकस्य वीरताँ ॥ ६८ ॥

गूढेङ्गितैः संज्ञया वा सूच्यतेऽर्थो हृदि स्थितः ।
अलङ्कारः स सूक्ष्मः स्याद्विदग्धैरेव लक्ष्यते ॥ ६९ ॥

हृदिस्थं कामुकं दृष्ट्वा वयस्यां वक्ति कामिनी ।
दन्तनिर्मितदम्पत्योर्विवाहं४ निशि कुर्वते ॥ ७० ॥

उद्दिष्टानां पदार्थानामनुद्दिष्टैर्यथाक्रमम् ।
सम्बन्धः कथ्यते योऽसौ यथासङ्ख्यं क्रमश्च सः ॥ ७१ ॥

शौर्येण काव्यबन्धेन रूपेण च नृप त्वया ।
रिपवः पण्डिता रामा निर्जिता निर्जिता हृताः ॥ ७२ ॥

गुरुदेवनृपादीनां माननें चाटुभू(भा)षणम् ।
प्रेयो नाम स विज्ञेयः प्रीतेरुत्पादको यतः ॥ ७३ ॥

तव पादाम्बुजद्वन्द्वं ध्यायतः पुरुषोत्तम ।
समुद्भूता महाप्रीतिर्दुष्टे वक्तुं न पार्यते ॥ ७४ ॥

त्वत्पादप्रणतिप्राप्तप्रसादात् रिपवः प्रभो ।
रमन्ते सह कान्ताभिः सम्प्रत्युद्यानभूमिषु ॥ ७५ ॥

कृशाङ्गैर्विकृतैर्नग्नैर्मुखवाद्यपरैर्गणैः ।
नृत्यद्भिः रमापिता गौरी नवोढा सुस्थिता य (भ)वं ॥ ७६ ॥

१ A न यासि। २ A थै। ३ A तः। ४ A दं। ५ A दृ F द। ६ A दु। ७ A रि।
८ D स्वा F स्ना। ९ D तः।

देव त्वद्वैरिकान्तानां स्नातानां नयनोदकैः।
प्रलापजपसक्तानां मुद्रालीके करस्थितिः ॥ ७७ ॥

त्वत्कोप(पे)पावकः साक्षाद्दासिस्तव नराधिपः(प)।
पतत्येष रिपौ यस्मिन् स भस्म भवति क्षणात् ॥ ७८ ॥

दृश्यते सेतुरद्यापि राघवेण कृतो महान्।
रावणो निहतः सङ्ख्ये सीता प्रत्याहृता यतः ॥ ७९ ॥

रावणाज्जातसन्त्रासो मारीचिर्मृगरूपधृक्।
लोभयन्स्वर्णशृङ्गाद्यैर्विद्धो रामेण लीलया ॥ ८० ॥

भिन्नां शूर्पनखानासां निर्यद्रुधिरसन्ततिम्।
दृष्ट्वा जुगुप्सितां सीतां जहास रघुनन्दनः ॥ ८१ ॥

स वामनवपुर्देयाद्देवो निःश्रेयसं सताम्।
पद्भ्यां लोकत्रयं क्रामन् यश्चकाराद्भुतं महत् ॥ ८२ ॥

अहङ्कारपरं वाक्यं वंशवीर्यश्रुतादिभिः।
बध्यते यत्तदूर्जस्वि कथितं कविभिः पुरा ॥ ८३ ॥

कारागारे धृतः शक्रो बलान्निर्जित्य सङ्गरे।
तस्य मे दशकण्ठस्य विहाराद्दूत किं भयम् ॥ ८४ ॥

तद्वाचकैः पदैः साक्षादनुक्त्वा तस्य सिद्धये।
भङ्ग्यन्तरेण कथनं पर्यायोक्तिरुदाहृता ॥ ८५ ॥

रिपवस्तस्य भूपालाः सदाराः पाणिसम्पुटैः।
पिबन्त्यरण्यमासाद्य नित्यं नवनवं जलम् ॥ ८६ ॥

क्वापि कार्ये प्रवृत्तस्य यदि दैवसहायता।
कथ्यते यत्र तत् ख्यातं समी(मा)हितमलङ्कृतम् ॥ ८७ ॥

रुष्टा (ष्टां) प्रार्थयमानेन गौरीकण्ठग्रहो हठात्।
प्राप्तः शिवेन कैलासकम्पाद्रावणनिर्मितात् ॥ ८८ ॥

१ A त्वा। २ A मुजालीके। ३ A क्षासिस्त। ४ A स्मसाङ्ग। ५ A ची। ६ A स।
७ A यादेवे। ८ A सह। ९ A यत्र दूर्जिस्विः। १० A न्त्या रण। ११ A त्वे।

समृद्धो[1](द्धेः) हेमरत्नानामाशयस्य समुन्नतेः।
वर्णनं क्रियते यत्र तदुदात्तं प्रचक्षते ॥ ८९ ॥

त्वत्पादनतिमात्रेण समृद्धिर्जायते नृपे[2]।
पद्मरागमहानीलहेममौक्तिकशालिनी ॥ ९० ॥

यं पश्यति क्षमापाल भवद्दृष्टिः[3] प्रसेदुषी।
तेन स्पर्धां वितन्वन्ति शक्रवैश्रवणादयः ॥ ९१ ॥

दृष्टमर्थमपन्हुत्य व्याजेनान्यस्य कीर्तनम्।
तदुत्कर्षवर्तीं[4] प्राहुरपन्हुतिमलङ्कृतिम् ॥ ९२ ॥

अयं न धरणीनाथ करे[5] कौक्षेयकस्तव।
त्वत्प्रतापानलस्येयमुद्गता धूमसन्ततिः ॥ ९३ ॥

अखण्डेषु[6] सखण्डेषु[7] नानार्थत्वं पदेषु यत्।
गुम्फ्यते कविभिः काव्यैः[8] श्लिष्टमिष्टं मनीषिणाम् ॥ ९४ ॥

हतवान् दानवान् क्रूरान्भक्तवृन्दावनप्रियः[9]।
पूज्यज्येष्ठबलः श्रीमान् भवान् कृष्णश्च भूपते ॥ ९५ ॥

सर्वहेतिभयात्त्वत्तः[10][11] शत्रवस्तन्मृगीदृषः।
आसन्नविधवाकारास्त्वयि सङ्ग्रामसङ्गते[12] ॥ ९६ ॥

क्रियाजातिगुणाधी(दी)नामुक्त्वा[13] वैकल्यमेकशः।
उत्कर्षस्याभिधानं यत्सा विशेषोक्तिरिष्यते ॥ ९७ ॥

अनाकारगतिश्चन्द्रस्त्वन्मुखं कठिनस्तनि[14]।
असागरसभुद्भूता सुधेयं वचनं तव ॥ ९८ ॥

उत्कृष्टैः[15] सह निर्देशो व्यापारे यत्र कथ्यते।
साम्ययोगः स विज्ञेयो विशेषोत्पादहेतवे ॥ ९९ ॥

भवान् शक्रश्च राजेन्द्र विभ्रतो भुवनत्रयम्।
त्वं धर्मचरणादेव[16] मरुत्वान्वृष्टिसर्जनात्[17] ॥ १०० ॥

१ F द्धौ। २ A पः। ३ A ट्टि। ४ A यतां। ५ A रः। ६ A ष। ७ D पदार्थेषु। ८ D वाच्यैः श्लिष्ट मनीषिणाम्। ९ A ष। १० A क्तं। ११ A त्तू। १२ A ङ्गतौ। १३ D क्त्वा। १४ A नी, नं। १५ A उद्दिष्टैः। १६ A व। १७ A न्द।

अविरोध्यपि यद्वस्तु विरुद्धमिव भाष ( स ) ते ।
यत्र सोऽयमलङ्कारो विरुद्ध इति कथ्यते ॥ १ ॥

हारयोगेऽपि दारिद्र्यं न जहात्युदरं तव ।
अर्धस्थमपि वामोरु गुरुतां जघनं गतम् ॥ २ ॥

निर्वेदादथ सन्तोषादन्यदेव प्रशस्यते ।
अप्रस्तुतप्रशंसेयमाख्याता कविभिः पुरा ॥ ३ ॥

अपि वर्षसहस्राणि भ्रान्त्वा नो लभ्यते मरौ ।
तरुच्छाया दलं मूलं फलं जलमनाविलम् ॥ ४ ॥

अज्ञानाद्वा प्रसङ्गाद्वा बुद्धिपूर्वमथापि वा ।
आसृष्टममृतं येन स भवत्यजरामरः ॥ ५ ॥

निन्दाव्याजेन यत्किञ्चिच्छ्रे(स्तू)यते सविशेषणम् ।
व्याजस्तुतिरिति ख्याता नागरोक्तिविशारदैः ॥ ६ ॥

अधुनापि न शुष्यन्ति समुद्राः सप्त भूपते ।
महतापि किमेतेन त्वत्प्रतापाग्निना कृतम् ॥ ७ ॥

अर्थेऽन्यस्मिन् प्रवृत्तेन किञ्चित्तत्सदृशं फलम् ॥
निर्दिश्यते प्रतीत्यर्थं तन्निदर्शनमुच्यते ॥ ८ ॥

खलं खलु गुणाः प्राप्य भजन्ते दोषरूपताम् ।
अहिवक्त्रं समासाद्य दुग्धं सम्पद्यते विषम् ॥ ९ ॥

गुणानां कर्मणां वापि सहभावो निबध्यते ।
यत्र काव्ये समाख्याता परिवृत्तिरियं बुधैः ॥ ११० ॥

राजन्धर्मकरं स्तुत्यं सततं यत्सुखावहम् ।
तद्दत्वा द्रविणं कीर्त्तिमग्रहीस्त्वमनश्वरीम् ॥ ११ ॥

रणरङ्गाङ्गणे वीर शस्त्राणि पततां द्विषां ।
प्राणमात्राभयं दत्वा सर्वं धर्मं त्वमग्रहीः ॥ १२ ॥

---

१ A व । २ D दुच्य । ३ A पो । ४ A ग । ५ A कं । ६ D सृत्युं । ७ A लग्द । ८ A स्थ ।

करशाखाग्रमादाय द्विषतां सङ्गतान्तरे ।
भूवाजिगजसम्पन्ना दत्ता लक्ष्मीस्त्वया नृप ॥ १३ ॥

अर्थस्याभीष्टभूतस्य यत्राशंसनमुच्यते ।
प्रशस्तवाचकैः शब्दैः साशीरित्यभिधीयते ॥ १४ ॥

लक्ष्मीलोचननीलाब्जविकासरजनीकरः ॥
सुभगङ्करणो भूयाद्युष्माकं मधुसूदनः ॥ १५ ॥

अलङ्क्रियाणां बह्वीनां द्वयोरपि निबन्धनम् ।
क्रियते यत्र तत्ख्यातं सङ्कीर्णमिति कोविदैः ॥ १६ ॥

यदि सा मृगशावाक्षी पाणिपल्लवशालिनी ।
दैवाद्दृष्टिपथं यायात्तया(दा) मोदेत मे मनः ॥ १७ ॥

उरस्याङ्के करे बिभ्रत्कौस्तुभं श्रियमम्बुजम् ।
हरिर्वः श्रेयसे भूयाल्लक्ष्मीवक्त्राब्जषट्पदः ॥ १८ ॥

गुणः प्रबन्धविषयः कवेर्भीत (र्भाव)स्तु मानसः ।
भाविकं नाम तत्प्राहुः काव्यालङ्कारकोविदाः ॥ १९ ॥

सर्गबन्धो महाकाव्यं समीक्षेतास्य लक्षणम् ।
आशीर्वादो नमस्कारो वस्तूद्देशोऽपि तन्मुखः ॥ १२० ॥

पौराणिककथोद्भूतमितिहासकथाश्रितम् ।
स्वबुद्ध्युत्प्रेक्षितं माङ्गैर्विशिष्टपुरुषाश्रितम् ॥ २१ ॥

धर्मार्थकाममोक्षाणां कथनैर्यत्समन्वितम् ।
पुरसागरशैलर्तुसोमसूर्या (र्यो) दयैरपि ॥ २२ ॥

जलोद्यानमधुक्रीडासम्भोगोत्सववर्णनैः ।
विवाहैर्विप्रलम्भैश्च पुत्रजन्मोपवर्णनैः ॥ २३ ॥

द्यूतमन्त्रप्रयाणाजिनायकोत्कर्षकीर्तनैः ।
एतैर्वर्णनकैर्युक्तं न्यूनाधिक्येन दुष्यति ॥ २४ ॥

१ A त्त। २ D ली। ३ A ह्वी। ४ D ता। ५ A न। ६ D वै। ७ A त्म। ८ F तै।
९ D दयोऽपिच।

उच्छ्वासोन्मेषसर्गैर्वा काण्डस्तवै[1]कसन्धिभिः ।
आश्वासैर्वा तथाध्यायैः पद्धत्या च विराजितम् ॥ २५ ॥

एतैरनतिविस्तीर्णैर्भव्यवृत्तैः सु[2]सन्धिभिः ।
रचितं रसभावाढ्यं काव्यं लक्षणसंयुतम् ॥ २६ ॥

वृत्तस(ग)न्धि तथा चूर्णं समस्तपदबन्धुरम् ।
त्रिःप्रकारमिदं गद्यं पू[3]र्ववर्णनकैर्युतम् ॥ २७ ॥

गद्यैः पद्यैः समायुक्तामेतद्वर्णनकैर्युताम् ।
चम्पुनाम्ना समाख्यातां शुश्रूषेत महीपतिः ॥ २८ ॥

रूपाणि नाटकादीनि दश वीक्षेत भूपतिः ।
तत्रादौ नाटके बीजं स्वल्पोद्दिष्टं तु कारणम् ॥ २९ ॥

अवान्तरार्थविच्छेदे[4] बिन्दुरच्छेदकारणम् ।
कथामध्ये समुत्पन्नमासमाप्ते[6]ः पताकिका[5] ॥ १३० ॥

प्रादेशिकी स्यात्प्रकरी त्रिव[8]र्गः कायमुच्यते ।
एता(ः) प्रकृ[9]तयः पञ्च प्रोक्ता नाटकवेदिभिः ॥ ३१ ॥

पूर्वावस्थास्विहारम्भः साकल्पो[10](सङ्कल्पो)मानसः स्मृतः ।
प्रयत्नस्तु फलावाप्ते[11]र्व्यापारोऽतित्वरायुतः ॥ ३२ ॥

[12]अपायपाँ[13]तका(को)पायैः[14](?) प्राप्तिः सा(त्प्याशा) परिकीर्तिता ।
प्रत्यूहस्य प्रतीकारो नियताप्तिश्च निश्चिता ॥ ३३ ॥

परिपूर्णफलावाप्तिः फलागम इति स्मृतः ।
इत्यवस्थाः समाख्याताः पञ्च नाटकसंश्रयाः ॥ ३४ ॥

बीजं[15]प्रारम्भयोगेन मुखसन्धिरुदाहृतः ।
बिन्दु यत्र(यत्न)समायोगे सन्धिः प्रतिमुखं मतम् ॥ ३५ ॥

पताकाप्त्याशयोर्योगे गर्भसन्धिरुदीरितः ।
प्रकरीनियताप्तिभ्यां विमर्शः सन्धिरिष्यते ॥ ३६ ॥

---

१ A म्ब । २ A स । ३ D सर्वं । ४ D द । ५ D न्ना । ६ A प्तैः । ७ D कः । ८ A र्णः F र्गाः ।
९ D तः । १० A ल्यो । ११ D पैः A ये । १२ F आयायथान्त । १३ A यात । १४ A पैः । १५ D जं ।

कार्यात्फलागमोपेतात्सन्धिर्निर्वहणं भवेत् ।
इति प्रगदिताः पञ्च सन्धयः सन्धिकोविदैः ॥ ३७ ॥

गुणैः श्लाघ्यैः समायुक्तः ख्यातवंशश्च नाटकैः (के) ।
धी[1]रोदात्तः प्र[2]तापी च[3] काव्ये वा नायको नृपः ॥ ३८ ॥

पुरावृत्तानुकर्तव्या प्र[4]शस्ता नाटके कथा ।
पञ्चाद्या दशपर्यन्तास्तस्मिन्नङ्काः प्रकीर्तिताः ॥ ३९ ॥

एको रसोऽत्र मुख्यः स्याच्छृङ्गारो वीर एव वा ।
एवमन्ये रसाः सर्वे कुर्यान्निर्वर्ह (ह) णे[5]ऽद्भुतम् ॥ १४० ॥

देवद्विजनरेन्द्राणां लिङ्गिनां संस्कृतं वचः ।
भवेद्वाक्यं महादेव्या मन्त्रिजाव(वे)श्ययोः क्वचित् ॥ ४१ ॥

स्त्रीणां विदूषकस्यापि शूद्राणां प्राकृतं वचः ।
म्लेच्छान्त्यजपिशाचादे[6]ः पैशाचं वा[7]ऽपि मागधम् ॥ ४२ ॥

कार्य(ः)प्रकरणे नेताऽमात्यो विप्रोऽथवा वणिक् ।
उत्प्रेक्ष्य[8] स तथा कुर्याच्छेषं नाटकलक्षणम् ॥ ४३ ॥

यत्र वक्ता भवेदेकः स्वरूप[9](स्य)वृत्तं परस्य वा ।
निपुणः पण्डितो धूर्त एकाङ्कः स तु भाणकः ॥ ४४ ॥

देवासुरकथाबद्धस्त्र्यङ्को द्वादशनायकः ।
एवं समवकारः स्याच्छेषं नाटकवद्भवेत् ॥ ४५ ॥

ईहामृ[10]गस्त्वयं प्रोक्तो दिव्यप्रोद्धतनायकः ।
दिव्यस्त्रीहेतुसङ्ग्रामस्त्रीरोपकथनात्मकः ॥ ४६ ॥

शृङ्गारहास्यरहितै रसैः सर्वैः समन्वितैः[11] ।
प्राप्तोऽयमुच्यते यत्र धीरोदात्तश्च नायकः ॥ ४७ ॥

मनुष्यनायकः ख्यातः स्वल्पस्त्रीजनसंयुतः ।
नियुद्धयुद्धसङ्घर्षैस्तर्जनेन च संयुतः ॥ ४८ ॥

---

१ A वी। २ A ती। ३ A व। ४ D या। ५ D णो। ६ A दैः। ७ F चा। ८ D क्ष्यः।
९ D पयस्य। १० D न्मृ। ११ A तैः।

एकाङ्कः स्त्रीविहीनो वा बहुभिः पुरुषैर्युतः ।
व्यायोगोऽयं समाख्यातो नाट्य[1]लक्षणकोविदैः ॥ ४९ ॥

ख्याताख्यात[2]समायुक्तः स्त्रीविलास[3](प)समन्वितः ।
नृनायको निर्वृत्ता[4]जिः करुणोऽत्ररसो मतः ॥ १५० ॥

भारतीवृत्तिबहुला(लो) नान्या(ना)चाकुलचे(चे)ष्टितः ।
उत्सृष्टिकाङ्कः[6] कथितो नाट्य(ट्य)तत्त्वविचक्षणैः ॥ ५१ ॥

मुनिभिर्ब्राह्मणैः[7] क(दु)ष्टनरैः[8] प्राकृतसंस्कृतैः ।
वचोभिः क्रियते हास्यं शुद्धं प्रहसनं हि तत् ॥ ५२ ॥

वेश्या नपुंसकश्चेटो विटो धूर्तश्च बन्धकी[9] ।
वेषचेष्टो[10]क्तिविकटा बहुदम्भसमन्विता ॥ ५३ ॥

।
॥ ५४ ॥

।
कम् ॥ ५५ ॥

: ॥ ५६ ॥

॥

८ ॥

॥

०॥

कः। ७ A ब्र। ८ A कंचे।
। १४ A न्योन्य। १५ A द्वि।

कार्यात्फलागमोपेतात्सन्धिर्निर्वहणं भवेत् ।
इति प्रगदिताः पञ्च सन्धयः सन्धिकोविदैः ॥ ३७ ॥

गुणैः श्लाघ्यैः समायुक्तः ख्यातवंशश्च नाटकैः (के) ।
धीरोदात्तः प्रतापी च काव्ये वा नायको नृपः ॥ ३८ ॥

पुरावृत्तानुकर्तव्या प्रशस्ता नाटके कथा ।
पञ्चाद्या दशपर्यन्तास्तस्मिन्नङ्काः प्रकीर्तिताः ॥ ३९ ।

एको रसोऽत्र मुख्यः स्याच्छृङ्गारो वीर एव वा ।
एवमन्ये रसाः सर्वे कुर्यान्निर्वह (ह) णेऽद्भुतम् ॥ १४० ॥

देवद्विजनरेन्द्राणां लिङ्गिनां संस्कृतं वचः ।
भवेद्वाक्यं महादेव्या मन्त्रिजाव(वे)श्ययोः क्वचित् ॥ ४१ ॥

स्त्रीणां विदूषकस्यापि शूद्राणां
म्लेच्छान्त्यजपिशाचादेः पैश

कार्य(ः)प्रकरणे नेताऽमात्यो
उत्प्रेक्ष्य स तथा कुर्याच्छेषं

यत्र वक्ता भवेदेकः स्वरूप(
निपुणः पाण्डितो धूर्त एका

देवासुरकथाबद्धस्त्र्यङ्को
एवं समवकारः स्याच्छेषं

ईहामृगस्त्वयं प्रोक्तो दि
दिव्यस्त्रीहेतुसङ्ग्रामस्त्रीरो

शृङ्गारहास्यरहितै रसैः
प्राप्तोऽयमुच्यते यत्र धं

मनुष्यनायकः ख्यातः
नियुद्धयुद्धसङ्घर्षैस्तर्जनं

---

१ A वी। २ A ती। ३ A. व।
९ D पयस्य। १० D न्मृ। ११ A तैः।

एकाङ्कः स्त्रीविहीनो वा बहुभिः पुरुषैर्युतः ।
व्यायोगोऽयं समाख्यातो ना[1]ट्यलक्षणकोविदैः ॥ ४९ ॥

ख्याताख्यात[2]समायुक्तः स्त्रीविलास[3](प)समन्वितः ।
नृनायको निर्वृ[4]त्ताजिः करुणोऽत्ररसो मतः ॥ १५० ॥

भारतीवृत्तिबहुला(लो) नान्या(ना)चाकुलचे(चे)ष्टितैः ।
उत्सृष्टिकाङ्कः[5] कथितो नाद्य(ट्य)तत्त्वविचक्षणैः ॥ ५१ ॥

मुनिभिर्ब्राह्मणैः[6] क(दु)ष्टनरैः प्राकृतसंस्कृतैः[7] ।
वचोभिः क्रियते हास्यं शुद्धं प्रहसनं हि तत् ॥ ५२ ॥

वेश्या नपुंसकश्चेटो विटो धूर्तश्च बन्धकी[8] ।
वेषचे[10]ष्टोक्तिविकटा बहुदम्भसमन्विता ॥ ५३ ॥

नानारूपाणि यत्र स्यु[11]र्वीथ्यङ्गानि त्रयोदश ।
सङ्कीर्ण(र्णं)नाम तत्प्रोक्तमेतत्प्रहसनं बुधैः ॥ ५४ ॥

एकपात्रा द्विपात्रा वा रसैः सर्वैः समन्विता ।
वीथ्यङ्गयुक्ता चैकाङ्का वीथिका नाम रूपकम् ॥ ५५ ॥

सूक्ष्मार्थस्य पद[12]स्यान्यपदेनार्थप्रकाशनम् ।
अङ्गमुद्धै[13](द्धा)त्यकं नाम वीथ्यङ्गं प्रथमं बुधैः ॥ ५६ ॥

यत्रान्य[14]स्य समादेशात् कार्यमन्यत्प्रसाध्यते ।
तच्चावल[15]गितं नाम विज्ञेयं नाट्यवेदिभिः ॥ ५७ ॥

प्रस्तुतार्थे तु कस्मिँश्चिच्छुभे वाऽप्यथवाऽशुभे ।
कौशलादुच्यतेऽन्योऽर्थस्तदवस्पन्दितं मतम् ॥ ५८ ॥

उपहासेन संयुक्ता ना[16]लिका स्यात्प्रहेलिका ।
असत्प्रलापः स ज्ञेयो मूर्खेषु बुधभाषितम् ॥ ५९ ॥

एकद्वित्रिप्र[17]वचना वा[18]क्केली कथ्यते बुधैः ।
असद्भूतं मिथ(ः)स्तोत्रं प्रपञ्चो हास्यकृन्मतः ॥ १६० ॥

---

१ A ताघ । २ A ता । ३ A सी । ४ A वृ । ५ D ता । ६ D कः । ७ A व्र । ८ A कंच । ९ A का । १० A वे । ११ A स्यवी । १२ A दास्यान्य । १३ D द्घास्य । १४ A न्योन्य । १५ A ङ्गि । १६ D न । १७ A प्रति वचना । १८ D साक ।

२४

दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं[1] हि तत् ।
उक्तिप्रत्युक्तिमुत्कृष्टशूरयोऽधिबलं विदुः ॥ १६१ ॥

श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं भवेत् ।
व्याहारो हास्यलोभाढ्याच्छ(द्वाक्छ)लनात्तु छलं भवेत् ॥ १६२ ॥

संरम्भ[2]शस्त्रपतनविवाहपरिगुम्फितम् ।
बहुवाक्यापवादाभ्यां युतं गण्डं विदुर्बुधाः ॥ १६३ ॥

विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः ।
आनीयमानः स्वादुत्वं स्थायी भावो रसो मतः ॥ १६४ ॥

ज्ञान(य)मानतया तत्र विभावो भावपोष[3]कृत् ।
अनुभावो विकारस्तु भावसंसूचनात्मकः ॥ १६५ ॥

अनुकूलमनोधर्माः सात्विकाः परिकीर्तिताः ।
विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ॥ १६६ ॥

रोमाञ्चः प्रलयः स्वेदः स्तम्भः कम्पो विवर्णता ।
वैश्वं(स्व)र्यमश्रु चेत्यष्टौ भावाः सत्वसमुद्भवाः ॥ १६७ ॥

निर्वेदावेगवैवर्ण्यचिन्तासूयादर्प (मद) श्रमाः ।
स्वापो विबोधो निद्रा च दैन्यालस्यमपस्मृतिः ॥ १६८ ॥

शङ्का ग्लानिस्त्रपा मोहो गर्वश्चपलता मतिः ।
अवहित्थोग्रतातर्कास्त्रासोन्मादौ विषण्णता ॥ १६९ ॥

अश्रु हर्षः स्मृतिर्जाड्यममर्षो[10] मरणं धृतिः ।
त्रिंशदेते त्रिभिर्युक्ता भावाः स्युर्व्यभिचारिणः ॥ १७० ॥

हासः शोको रतिः क्रोधो जुगुप्साभयविस्मयाः ।
उत्साहश्चेति विज्ञेयाः स्थायिभावा रसाश्रयाः ॥ ७१ ॥

हास्यं करुणशृङ्गारौ रौद्रबीभत्ससंज्ञकौ ।
भयानकाद्भुतौ वीर इत्यष्टौ नाटके रसाः ॥ ७२ ॥

१ A मेदवं । २ A म्भं । ३ A योष । ४ A भावि । ५ D वैवर्ण्य । ६ D या । ७ A स्कृ ।
८ D शाको । ९ A ह्य । १० F षेमि ।

एवं काव्यकथाः श्रुत्वा विचार्य च गुणागुणौ।
ततस्तु तार्किकान् राजा कौतुकेन विवादयेत्[1] ॥ ७३ ॥

कुलेन विद्यया ख्यात्या समयोर्वाद इष्यते।
वादस्य विषयो गीतं नृत्तं वा वाद्यमेव वा ॥ ७४ ॥

स्वपक्षे साधनं यत्र परपक्षे च दूषणम्।
सिद्धान्तेनाविरोधश्च सम्बन्धश्च प्रतिज्ञया ॥ ७५ ॥

हेतुदृष्टान्तयोर्योगो निगमोपनयौ तथा।
पक्षस्य प्रतिपक्षस्य ग्रहो वादः स उच्यते ॥ ७६ ॥

साध्यधर्मविशिष्टस्य धर्मिणो यत्तु कीर्तनम्।
प्रतिज्ञा नाम सा प्रोक्ता हेतुस्तत्साधनं विदुः ॥ ७७ ॥

साध्यसाधनयोर्यत्रा[2]विनाभावः प्रदर्श्यते।
तदुदाहरणं प्रोक्तं निगमः पक्षनिर्णयः ॥ ७८ ॥

दृष्टान्ते कथित[3]व्याप्तेर्हेतोः पक्षोपसंहृतिः।
स[4] चाप्युपनये(यः)पक्षे(क्ष)धर्मख्यापनयोच्यते ॥ ७९ ॥

उपनयः पक्षधर्म[5]ख्यापनायोपयुज्यते।
शिष्यस्य गुरुणा सार्धं सतीर्थानां परस्परम् ॥ १८० ॥

वस्तुतत्वावबोधाय वादः कार्यो विमत्सरम्।
जातिभिर्निग्रहस्थानैश्छलैरपि समन्वितः ॥ ८१ ॥

स एव वादो जल्पः स्यात् ख्यातिपूजादिहेतुकः।
स्थापनं प्रतिपक्षस्य जल्पे[6] यस्मिन्न विद्यते ॥ ८२ ॥

वितण्डा नाम सा प्रोक्ता पूर्वोक्तफलसिद्धये।
स्थ(छ)लमस्य विकल्पेन परवाक्योपघा[7]तनम् ॥ ८३ ॥

सामा[8]न्येनोपचारेण वचनेनेति तत्त्रिधा।
प्रयुक्ते साधने सम्यगुत्तराप्रतिभा[9]सनात् ॥ ८४ ॥

१ A चार। २ A त्र। ३ D ता। ४ D adds this line। ५ A र्मा। ६ D ल्पो।
७ A द्या। ८ A मे। ९ D भासना।

समीकरणबु[1]ध्या यः प्रसङ्गो जातिरित्यसौ ।
प्रतिदृष्टान्तसरणं प्रतिज्ञाहानिरिष्यते ॥ ८५ ॥

अर्थान्तरस्य निर्देशः प्रतिज्ञान्तरमुच्यते ।
स[2] प्रतिज्ञाविरोधो यद्वैरं[3] हेतुप्रतिज्ञयोः ॥ ८६ ॥

प्रतिज्ञायाः परित्यागस्तत्सं[4](स सं)न्यासो विधीयते ।
विशेषरहिते हेतौ दूषिते प्रतिवादिना ॥ ८७ ॥

सविशेषस्य कथनं हेत्वन्तरमुदाहृतम् ।
प्रकृता[5]र्थपरित्यागात्तदसम्बद्धभाषणम् ॥ ८८ ॥

अर्थान्तरमिति प्रोक्तं निग्रहस्थानसन्निधौ ।
वारत्रितयमुक्तोऽपि पर्षदा प्रतिवादिनां[6] ॥ ८९ ॥

यन्न वेत्ति परः सम्यग[7]ज्ञानाख्यं तदुच्यते ।
प्रतिज्ञादेः क्रमं त्यक्त्वा क्रमव्यत्ययसङ्ग्रहः ॥ १९० ॥

अप्राप्तकालं तत्प्रोक्तं निग्रहस्थानवेदिभिः ।
केनाप्यवयवेनात्र हीनं तन्न्यू[8]नमुच्यते ॥ ९१ ॥

हेतूदाहरणाधिक्यादधिकं तद्विदुर्बुधाः ।
अनुवादं परित्यज्य पुनस्तस्यैवं[9] भाषणम् ॥ ९२ ॥

शब्दस्यार्थस्य तत्प्रोक्तं पुनरुक्तं मनीषिभिः ।
विज्ञातस्य पदार्थस्य त्रीन्वारान् भाषितस्य च ॥ ९३ ॥

नानु[10]वादः परोक्तस्य भवेत्तद(दन)नुवादनम् ।
उत्तरस्य यद[11]ज्ञानमुक्तौ[12] त्वप्रतिभा बुधैः ॥ ९४ ॥

अन्यकार्या[13]त्कथाभङ्गः कथाविक्षेप उच्यते ।
अभ्युपेत्य निजं दोषं परदोषस्य भाषणम् ॥ ९५ ॥

मतानुज्ञेति सा प्रोक्ता दोषोद्भावनवेदिभिः ।
प्राप्तस्य निग्रहस्थानं तदनुद्भावनं च[14] यत् ॥ ९६ ॥

---

१ A ब । २ A F सं । ३ A यं द्वैरं F A वै । ४ F सत्सं । ५ A तापा । ६ A ता । ७ D ग् ज्ञानाख्यं च । ८ A तन्यू । ९ A स्यव । १० A......नानुवादनं । ११ D प । १२ D क्त । १३ D र्यक । १४ D तु ।

निग्राह्योपेक्षणं नाम निग्रहस्थानमुच्यते ।
अनिग्रहे निग्रहस्य यदुद्भावनमुच्यते ॥ ९७ ॥

अनिग्राह्यं तु योगोऽयं दूषणत्वेन कीर्तितः ।
स्वसिद्धान्तं परित्यज्य यदुच्छृङ्खलभाषणम् ॥ ९८ ॥

अपसिद्धान्तनामेदं निग्रहस्थानमुच्यते ।
अपक्षधर्मो हेतुर्यः सोऽसिद्धः परिकीर्तितः ॥ ९९ ॥

साध्यधर्मविरुद्धो यः[2] विरुद्धः परिकीर्तितः ।
पक्षत्रितयगामी यः सोऽनैकान्तिक उच्यते ॥ २०० ॥

कालात्ययापदिष्टोऽयं पक्षे योऽन्येन बाध्यते ।
सन्देहहेतुभूतेन बाध्यो यः प्रतिहेतुना ॥ १ ॥

हेत्वाभासः स विज्ञेयः समः प्रकरणेन सः ।
ततो विवदमानेषु निग्रहस्थानवर्त्मनि ॥ २ ॥

स्थितानामजयं ब्रूयादितरेषां जयं नृपः ।
इति शास्त्रविनोदेन दिनशेषं नयेन्नृपः ॥ ३ ॥

कवीनां तार्किकाणाञ्च प्रसादं भूरि दापयेत् ।
उक्तः शास्त्रविनोदोऽयं सोमेश्वरमहीभुजा ॥ ४ ॥

इति शास्त्रविनोदः ॥ २ ॥

इदानीं गजवाह्यालीविनोदः परिकीर्त्यते ।
गजैर्विनोदैनै[3](नं) कुर्याद्वाह्याली[4] सङ्गतो नृपः ॥ ५ ॥

सङ्ग्रामार्थं श्रमस्तेषां कार्यो यवनयोधने ।
मदहीना न धावन्ति न युध्यन्ते मतङ्गजाः ॥ ६ ॥

मद एव गुणस्तस्मात्तदर्थं यत्नमाचरेत् ।
बृंहणैः कवलैर्वृष्यैस्तदासञ्चय(ज्जन)कारणैः ॥ ७ ॥

व्यै[5]स्तारकारकैश्चान्यैर्मुखवर्धनकैरपि ।
करवृद्धिकरैर्योगैः कट[6]शुद्धिकरैरपि ॥ ८ ॥

---

[1] A omits this line। २ D स सिद्धः । ३ A दं । ४ A द्वागजा । ५ A व्या D व्यस्तारककरै । ६ D र ।

प्रभेदनैर्वर्धनैश्च गन्धवर्णकरैस्तथा।
दोषो(दर्पो)त्पादनकैः पिण्डैर्जातिधात्वनुसारतः ॥ ९ ॥

गजानुपचरेद्राजा प्रयत्नादन्नपानकैः।
तत्रादौ जातयो ज्ञेया त (स्त)स्माद्वक्ष्यामि लक्षणम् ॥ २१० ॥

गात्रापरं नखा दन्ताः कोशो मध्यं करं गलः।
तनून्येतानि दीर्घाणि शीर्षं पृष्ठं च वालधिः ॥ ११ ॥

तलानि चिबुकं चैव ह्रस्वानि च भवन्ति हि।
समदौ च कटौ कुक्षिः कर्णौ च तनवो भृशम् ॥ १२ ॥

अङ्गुली हनुकेशं च वक्षः कुब्जं प्रदृश्यते।
यस्य श्यामो भवेद्वर्णः कृष्णे स्थूले च लोचने ॥ १३ ॥

आकार ईदृशः प्रोक्तो वनचारस्तु कथ्यते।
एकाकी न प्रयात्येष गोप्रचारं[1] च गच्छति ॥ १४ ॥

यूथानुवर्ती भीरुश्च चलं[2]चित्तो वने मृगः।
धृतस्य कर्मकाले तु भवेदुत्तानवेदिता ॥ १५ ॥

दुःशीलता च चापल्यं लक्ष्मैतन्मृगदन्तिनः।
उरो मुखं तथा कर्णौ विशालानि भवन्ति हि ॥ १६ ॥

गात्रापरं शिरो दन्ताः सगदे(दं) वं[3]र्मकन्धरम्।
केशा वालां[4]श्च[5] रोमाणिं स्थूलानि च भवन्ति हि ॥ १७ ॥

वालधिः पृष्ठवंशश्च चिबुकं हस्त एव च।
भवन्त्येतानि दीर्घाणि लम्बते मेढ्रकोशकम् ॥ १८ ॥

भेककुक्षिसमाकुक्षि लो(लो)चने कपिले शुभे।
कृष्णमे[6]घनिभो वर्णः सर्वाङ्गे[7] परिपीनता ॥ १९ ॥

जाड्यं च बलिबाहुल्यमाहुर्मन्दस्य लक्षणम्।
वने तु वसतस्तस्य शशादेर्न भयं भवेत् ॥ २२० ॥

१ A र इव। २ D बलिचित्ता। ३ D च। ४ लश्च। ५ A श्च। ६ D वर्ण। ७ D ङ्ग A ङ्गो।

न रुष्यति भवत्येको निद्रालुः सततं भवेत् ।
शिक्षाकाले धृतस्यैतल्लक्षणं परिदृश्यते ॥ २१ ॥

गम्भीरं वेदनं तस्य कर्म शीघ्रं न शिक्षति ।
शिक्षितं विस्मरत्याशु मत्तः स्मरविशि[1]क्षितः ॥ २२ ॥

मन्दकोपो गतौ[2] स्तद्यो[3](ध्यो)मन्दो मातङ्ग ईदृशः ।
गात्रापरं करः पुच्छं न स्थूलं न कृशं समम् ॥ २३ ॥

विशालमुन्नतं वक्षो धनुराकारवंशकः ।
कुम्भौ च ना(वा)तकुम्भश्च कटौ चापि प्रवेश(ष्ट)कौ ॥ २४ ॥

स्थूल(ला)दन्ता भवन्तीह विपुलं श्रवणासनम् ।
[4]वैराहजघनश्चैव छागकुक्षिर्मनोहर[5]ः ॥ २५ ॥

समस्निग्धा नखा दन्ता लोचने मधुपिङ्गले ।
गौरवर्णोऽस्त्युदग्रश्च कृष्णबिन्दुविराजितः ॥ २६ ॥

आताम्रं तालुजिह्वोष्ठमेतद्भद्रस्य लक्षणम् ।
वने यूथस्य पु[6]रतो यात्याहारविहारयोः ॥ २७ ॥

मेघभेरीस्वनाद्भीतिं नैति हृष्यत्यनाकुलः ।
समानीतो वनात्कर्मका[7]ले सो(ऽस्या)न्वर्थवेदना ॥ २८ ॥

आशुग्राही सुशीलश्च न विस्मरति शिक्षितम् ।
कर्मशूरः स्वयं शूरो रूपलक्षणसंयुतः ॥ २९ ॥

ईदृशो भद्रजातिः स्यात्कुञ्जरो विजयावहः ।
मिश्रस्तूभयसंयोगे[8] सङ्कीर्णस्त्रिगुणो मतः ॥ ३० ॥

भद्रमन्दो भद्रमृगो मन्दभद्रस्तथापरः ।
मन्दमृगो मृगभद्रो मृगमन्दश्च मिश्रकः ॥ ३१ ॥

भद्रमन्दमृगश्चैको भद्रो वा मृगमन्दयोः ।
मन्दभद्रमृगश्चान्यो मन्दो वा मृगभद्रयोः ॥ ३२ ॥

---

१ A शि । २ D तिः । ३ D ध्या । ४ D वा । ५ A भवः । ६ A F धु । ७ D लस्तत्त्वार्थवेदने ।
८ F त्व । ९ A गो ।

गुणाधिक्येन नामैषां वर्णाद्वा मुखलक्षणात् ।
मिश्रसङ्कीर्णजातीनां नामलक्षणमीदृशम् ॥ ३३ ॥

मिश्राणां मिश्रचारस्तु सङ्कीर्णानां तथाह्वयः ।
शुद्धं(द्ध) सङ्कीर्णमिश्राणां जातिभेद इतीरितः ॥ ३४ ॥

एतेषामुत्तमो भद्रो मन्दो मध्यमलक्षणः ।
मृगः कनिष्ठो मिश्राणां सङ्कीर्णानामयं क्रमः ॥ ३५ ॥

श्लेष्मपित्तानिला ख्याता धातूनामपि[1] जातिवत् ।
शुद्धा मिश्राश्च सङ्कीर्णा भेदा ज्ञेया विचक्षणैः[2] ॥ ३६ ॥

सात्विकी कफतः पित्ताद्राजसी तामसी चलात् ।
प्रकृतिर्मिश्रसङ्कीर्णा विज्ञेया पूर्ववद्बुधैः ॥ ३७ ॥

मेधावी स्निग्धवर्णश्च दीप्ताग्निर्मितभोजनः ।
अन्वर्थवेदी दीर्घायुः कामुकः सात्विको गजः ॥ ३८ ॥

वेगवान् बहुभुक् शूरः प्रज्ञावाँश्चलमानसः ।
उत्तानवेदी दुष्टश्च राजसोऽयमनेकपः ॥ ३९ ॥

क्लेशेन कर्म गृह्णाति गृहीतं विस्मरत्यपि ।
प्रत्यर्थवेदी निद्रालुस्तामसो द्विरदः स्मृतः ॥ २४० ॥

[3]बैल्लोचटा विदारी च गोक्षुरः शाल्मली वरी ।
वाजिगन्धा तु गोक्षीरो (गाक्षीरी) गोजिह्वा भूमिशर्करा ॥ ४१ ॥

हिंस्रा[4] च कुटजं धात्री छिन्ना माषाश्च चूर्णिताः ।
क्षीरेण सहितः पिण्डो गजानां बृंहणो[5] महत् ॥ ४२ ॥

बलागोक्षुरकुष्माण्डमाषधात्रीशतावरी ।
[6]उच्चटाकुटजां (जा) चूर्णं सम(भ)ये पयसान्वितः ( तम् ) ॥ ४३ ॥

प[7]रुषांकोल्लहिंस्राश्च लक्ष्मणा सिन्धुवल्लिका ।
चित्रर्कः[8] सुरसा शिग्रुः काश्मीरी गिरिकर्णिका ॥ ४४ ॥

---

१ A मिव । २ D यः । ३ D बालोच्चदा A बलोच्छदा । ४ A हिस्ता । ५ D णे । ६ D उच्चट कुंजरं चूर्णं समये F उच्चटाकुटलां । ७ D पुरुषान् कोलहिंस्रांश्च । ८ A कं ।

भूशर्कराऽग्निमन्थः शफ(म्व)री च शतावरी ।
पूतिकः कर्णिकारश्च व्यस्तारान्तै(रतै)लमम्बुना ॥ ४५ ॥

भल्लातमूलमूर्वा च कदली च महा[1]गुणः(हा) ।
केतकी च कुमारी च विदारी रक्तसौरिका ॥ ४६ ॥

एतैः समैः कृतश्चूर्णो[2] दधिक्षीरघृतान्वितः ।
दत्तः प्रतिभये[3] पिण्डो गजानां सुखवर्धनः ॥ ४७ ॥

कृष्णा घोला(ण्टा)वर्ता[4](बला)गुञ्जा सुवहा गोक्षुरः सहाँ ।
शताव्हा मु[6]शली वेलु(ल्लं)प्रती(ची)वलविदारिका ॥ ४८ ॥

भूशर्करा शाँल्मली च श्लक्ष्णाश्चूर्णीकृताः समाः ।
दध्ना पिण्डीकृता दत्ताः करीणां कटवर्धनैः(नाः) ॥ ४९ ॥

एलाप्रियङ्गुकुटजहरितालं मनःशिला ।
त्रिमैतत्कृ(यामा कृ)ष्णधान्या(ना)श्च रामठं सर्पकञ्चुकः ॥ ४५० ॥

आखुविद्वेषि(ष्य)हिंस्राश्च मुस्ताचित्रकसैन्धवाः ।
वी[9]ना(रा) रसोनो धत्तूरास्त्रिवृत्ता(ता) च विचूर्णिता ॥ ५१ ॥

एतैर्वस्तै(र्ति)स्तथा बस्तिः प्रलेपश्च कटे कृतः ।
प्रयुक्तोऽयं यथायोगं करीणां कटशोधकः ॥ ५२ ॥

पारापतशकृद्धिङ्गुवर्तिनां (र्तिवा)परिवर्तयेत् ।
यवमध्यप्रमाणा च मुहूर्तस्थितिमर्हति ॥ ५३ ॥

चित्रकश्च तथा दूर्वा घोण्टामूलमथापि वा ।
चूतश्च तैः कृतश्चूर्णो भेदनो मधुतैलयुक् ॥ ५४ ॥

गुडस्तैलं पु(सु)रा शू(शु)ण्ठी कृष्णामधुव(क)संयुतम् ।
षडङ्गमेतद्दातव्यं मदभेदै[11]नवर्धनम् ॥ ५५ ॥

अर्काशि[12]ग्रुरसोनाश्च कदम्बस[13]मुदायकः ।
पञ्चाट(क्ष)सुरसाह्या(ह्वा)श्च गुडूची च करञ्जकैः[14] ॥ ५६ ॥

---

१ D सुखावहा F सहागुवः । २ D र्णैः । ३ A यं । ४ D ती । ५ F दा । ६ A सु । ७ A श ।
८ A F कः । ९ A वा । १० A र्वात... । ११ D दवि । १२ A ग्र । १३ A वस्तु... । १४ D कम् ।

चम्पकं च समैरेतैश्चूर्णितैर्दधिमिश्रितैः ।
पिण्डोऽयं मदवृद्धौ स्यादिक्षुक्षीरघृतानि च ॥ ५७ ॥

केतकीशिग्रुसुरसावेल्लतू(न्त)रमुशी[1]रकम् ।
सिद्धका(को)यूषि(थि)का रम्भा कबन्धो[2] मुस्तकं च तैः ॥ ५८ ॥

चूर्णितैश्च समैः श्लक्ष्णैर्मधुतैलसमन्वितैः ।
दत्तैः प्रवर्तते गन्धः सिन्धु[3]राणां मदाम्भसि ॥ ५९ ॥

पारिजातकपुष्पाणि किंशुकं किर्णि[4]हं(हीं)गुडः ।
हरीतकी हस्तिकर्णी मधुना मँधु(द)शौक्ल्यकृत ॥ ४६० ॥

शिलाजतु[6]ज(च) तक्रेण शालिपिष्टमजापयः ।
यशः(यासः) काञ्ची च शौक्ल्यँस्य करणं करिणां मदे ॥ ६१ ॥

अञ्जनस्य तरोर्मूलं नारीरसपरिप्लुतम् ।
कुटजेन समायुक्तं नीलवर्णकरं मदे ॥ ६२ ॥

तालकद्विगुणा दार्वी रक्तवर्णकरी मदे ।
हरिद्रा मधुसंयुक्ता पीतवर्णा महामदे ॥ ६३ ॥

शयनावसरे दत्तां[9] ग्रां[10]समध्ये मधुप्लुता ।
श्यामं वर्णं करोत्याशु करिणां मदवारिणः ॥ ६४ ॥

धात्रीफलानि नी[11]ली च मधुकं कृष्णवर्णव(कृ)त् ।
दूर्वा च मधुना दत्ता हरितं वर्णमावहेत् ॥ ६५ ॥

बृहतीफलमूलानि शुण्ठी सैन्धवसंयुता ।
मूत्रपञ्चकृते (तो) कोशे लेपोऽयं कोपदीपनः ॥ ६६ ॥

कोष्टे(कुष्ठं)त्रा दारुरजनी त[12]गरं तैलसंयुतम् ।
पायुलेपप्रयोगेण करिणां कोपवर्धन[13]म् ॥ ६७ ॥

पिप्पली मरिचं शुण्ठी मर्कटीफलमेव च ।
तैलेन कटलेपोऽयं करिणः कोपयेद्भृशम् ॥ ६८ ॥

१ A शा। २ D न्धा। ३ A न्धू। ४ D हं। ५ D सर्वरोगहृत्। ६ A तुत F तुत। ७ D क्त्य। ८ D द। ९ A त्वा। १० D F कासं। ११ A ती। १२ A रङ्गम्। १३ D नः।

राजिका पीलुमूलं च फणिजं पिप्पली कणा।
नागरं बीजपूरेण पिण्डोऽयं कोपदीपनः ॥ ६९ ॥

कोपदीपनयोगास्तु कथिता ये कटादिषु।
पूर्वेद्युस्ते विधातव्या धावेच्चाहवकर्मणि ॥ ४७० ॥

बृंहणैः बृंह(हि)तानां च सप्त शोभा भवन्ति हि।
वक्ष्यामि लक्षणं तासां क्रमशो नामसंयुतम् ॥ ७१ ॥

करं कर्णौ च पुच्छं च तुच्छं चालयति द्विपः।
सृक्कणी तालु जिह्वा च स्तनयुग्मं[1] विलोचने ॥ ७२ ॥

ईषद्व्यक्तिं समायाति[2] सोज्झनं[3] (सौजन्यं) वर्धते क्रमात्।
सुच्छाया रक्तवृद्धिश्च सञ्जातरुधिरा मता ॥ ७३ ॥

प्रतिमाने च कण्ठे च मणिबन्धे च वक्षसि।
कक्षयोर्मांसवृद्धिश्चेत्प्रतिच्छन्नेति[4] सा मता ॥ ७४ ॥

सर्वसन्धिषु गात्रेषु वदने पक्षयोर्द्वयोः।
पीनता वलिनाशश्च यत्रासौ पक्षलेपिनी[5] ॥ ७५ ॥

कक्षयोः कन्द(न्ध)रोद्देशे दन्तस्योभयपार्श्वयोः।
उच्छूनता भवेद्यत्र धातुसाम्यं सकर्मता[6] ॥ ७६ ॥

वरिष्ठा द्यँ(द्यु)दियं[7] शोभा चतुर्थी करिणां सदा।
युद्धेऽध्वनि विनोदे च समकक्षा प्रशस्यते ॥ ७७ ॥

वंशा(शो)ऽस्य सम्म(म)तां याति त्रिकं पक्षो यथा(दा)गजे।
निद्रालुर्मन्दगामी च दीर्घोच्छ्वसस्तथालसः ॥ ७८ ॥

पञ्चमा(मी) संमकल्पेयं[8] शोभा शोभाकरी भृशम्।
गा(ग)तौ[10] च ल(ला)ति मांसानि षष्ठी सा[11] व्यतिकीर्णिका[12] ॥ ७९ ॥

निमग्नः पृष्ठवंश(शो)स्य कदल्युत्तानपत्रवत्।
यत्र सा द्रोणिका नाम शोभेयं सप्तमी मता ॥ ४८० ॥

---

१ A य। २ D साद्य। ३ D ज। ४ D च्छि। ५ A F ना। ६ D कर्म। ७ D दि त्रयं। ‘These two lines are omitted in D। ९A सकल्पेयं। १०D र्गातं। ११A स्या। १२D कर्णिका।

ततः सञ्जातशोभस्य मन्दा(दा)वस्थातु[1](स्तु) दन्तिनः।
अतः(अन्तः)पश्च मेहे[2](दे) सप्त द्वादशेतित्व(स)मीरिताः[3] ॥ ८१ ॥

पृष्ठं मेढ्रं समं तु स्यादीषद्रक्ते च लोचने।
कान्तिमान् करिणीलुब्धो नभश्च परिजिघ्रति ॥ ८२ ॥

गजवीथ्यां पदं धत्ते द्विपेभ्यः परिकुप्यति।
दर्शनीयो गजाघाती दन्ताभ्यां हन्ति भूरुहान् ॥ ८३ ॥

पांसुक्रीडनलोलैः[4] स्यात्पङ्कालेपनतत्परः।
प्रथमान्त(न्तां)मदावस्थां[5] प्राप्तः सञ्चित उच्यते ॥ ८४ ॥

स्वल्पनिद्रो रुषायुक्तो जृम्भते यस्तु सन्ततम्।
बहुक्रुद्धो[6] रक्तनेत्रो कोपावस्था द्वितीयकी ॥ ८५ ॥

कुरुते बृंहितं शश्वदन्नं च परिवर्तयेत्।
आलानं नाशु भजते शय्यां न प्रतिपद्यते ॥ ८६ ॥

वृक्षशाखां समालम्ब्य प्रसारयति कन्धराम्।
गमने पाटवं धत्ते तृतीये प्रसवे गजः ॥ ८७ ॥

उच्छूनः कटदेशस्तु मुखं च परिशोभितम्।
ऊर्ष(र्षा)मूलस्य[7] योगेन स्रोतसी[8] विवृते तथा ॥ ८८ ॥

कटं[9] चुम्बति हस्तेन तिर्यग्वीक्षणतत्परः[10]।
अपसर्पति पश्चाच्च क्रोधनः सृक्कलेहनः ॥ ८९ ॥

अत्यासन्नमदो हृष्टो वारणः स्यात्प्रभेदने।
दृश्यते तिलकप्रायं दानं यस्य कटद्वये ॥ ४९० ॥

वाग्विभे(ग्विभा)ति यतस्तस्मै कुप्येत्तिलकितं हि तत्।
वितस्तिमात्रं वदने दानं गण्डस्थलान्तरे ॥ ९१ ॥

पुष्करे सीकरस्रावी निर्भयोऽर्धकपोलिके[11]।
गच्छन्नीषन्मदस्रावी दानतः प्रतिभूयसा ॥ ९२ ॥

१ A स्तातु। २ A व। ३ D द्वगी। ४ D भः। ५ D हा। ६ A द्धो त्वसौ सेयं F द्धे कसों। ७ A आर्षमूलस्य मलं च F ऊर्ष...मूलं च। ८ A सा। ९ D टौ। १० D ग्गी। ११ A को।

दानप्रवाहौ[1] मिलितौ नेत्रयोर्दूषितामया(याः)।
मेघवद्गर्जितं यस्य पूर्वलक्षणलक्षितः॥ ९३॥

अधोऽनुबन्धिनी[2] बाह्या तृतीया परिकीर्तिता।
बहुगन्धिमदं[3]स्रावी समदक्षा(कक्षो) घनश्रिता(या)॥ ९४॥

हर्षकोऽप्यधिको यत्र विना(नो)दायोधने क्षमः।
सर्वसत्वजिघांसुः स्यादारूढस्य वशानुगः॥ ९५॥

राजवाह्यो[4] गजो यत्र सा भवेद्गन्धचारिणी।
सदा कलुषितस्वान्तो ग्रासद्वेषी[6] जिघांसनः॥ ९६॥

कर्णयोस्तनयोरक्ष्णोः कटयोस्तालुपुष्करे।
रोमहर्षेषु कोशेषु स्रवत्यँष्टासु सर्वदा॥ ९७॥

आरोहस्रवसो(त्श्रवसी) यस्यामवस्था क्रोधनी तु सा।
रात्रौ भ्राम्यति संरब्धः स्तम्भं नाश्रयते रुषा॥ ९८॥

निद्रां बुभुक्षां नो वेत्ति नेत्रकर्णावधिं श्रयेत्।
अधो मर्द(ः)प्रवाहेन(ण) भवेत्सो वलितापरः॥ ९९॥

अतिप्रवाहवापाभ्यां निर्मां[10]सश्चास्थिभूषणः।
प्रणिधित्रितयो(या)लम्बी[11] प्रतिबिम्बं हिनस्ति च॥ ५००॥

एवं निरङ्कुशो यस्यामवस्था सातिवर्तिनी।
न पश्यति न जानाति न शृणोति न तिष्ठति॥ १॥

सम्भिन्नमदमर्यादो यस्यां क्षौण्यौ(क्षोण्यु)ग्रगन्धवान्।
षष्ठ्यां निवर्तयेन्नागं सप्तमीं नैव लङ्घयेत्॥ २॥

अन्त्य[12]धारा(तु)क्षया[13]द्देही क्षिप्रमेव हि नश्यति।
एवं मदयुतान्नागान् विनोदाय प्रकल्पयेत्॥ ३॥

गजाध्यक्षं समाहूय दीपनायादिशेन्नृपः।
वीरसूडाभिधं वाद्यं मृदङ्गमिवं[14]हर्षणम्॥ ४॥

१ A F दौ। २ D तु। ३ A द्र। ४ A F ह्यां। ५ D वा। ६ A F षा। ७ A त्पृष्ठसु।
८ D न्द। ९ A व। १० A र्मा। ११ D म्बाः। १२ A न्य। १३ D क्षपदा। १४ A F ध्वनि।

ढक्का(क्क)या जयघण्टाभिर्वादयेति च निर्दिशेत् ।
रजन्याः प्रथमे यामे वीरसूडस्य वाह(द)ने ॥ ५ ॥

समन्ताद्गजमावेष्ट्य तिष्ठेयुः परिचारकाः ।
सिंहनादांश्च[1] ते कुर्युर्भटानां[2] रोमहर्षणान् ॥ ६ ॥

तेषां रवान्[3]समाकर्ण्य समाहूय महीपतिः ।
पट्टानि पट्टिकाश्चैव घनं[4] श्वेतं दुकूलकम् ॥ ७ ॥

शृङ्गारार्थं नृपो दद्यात्तेषां तेषां पृथक् पृथक्[5] ।
मण्डनार्थं मदेभानां तैलं सिन्दूरमेव च[6] ॥ ८ ॥

कौशुम्भं[7] वीरकक्षार्थं कोपायोद्दीपपिण्डकान् ।
निद्रारम्भे च निद्रार्थं[8] निद्रान्ते मद(भद्र)दन्तिनाम् ॥ ९ ॥

मृगाणां शयनान्ते च निद्रार्थे मद(न्द)दन्तिनाम् ।
उद्दीपनं ततः पिण्डान् प्रागुपात्तान् पृथक् पृथक् ॥ ५१० ॥

प्रकृत्या[9]द्यनुरोधेन महामात्रैः प्रदापयेत् ।
स्थापयेदातपे मन्दान् भद्रान्छायातपे गजान् ॥ ११ ॥

मृगांश्छायासु बध्नीयान्महामात्रो विचक्षणः[10] ।
विनोददिवसे तेषामन्नपानं निवारयेत्[11] ॥ १२ ॥

तैलेन जघनं लेप्यं सिन्दूरेण च मस्तकम् ।
वातकुम्भस्य मध्यं(ध्ये)तु[12] कुर्यात्तिलकमुत्तमम् ॥ १३ ॥

अलङ्कृतांस्तथा नागान् वाह्यालय[13]भ्यास(श)देशतः ।
आलानेषु च बध्नीयाद्[14] दूरतस्तु परस्परम् ॥ १४ ॥

शतधन्वान्तरायामां विस्तारे षष्टिसम्मितां[15] ।
शङ्कुगर्तदृषद्धीनां कण्टकादिविवर्जिताम् ॥ १५ ॥

अपांसुलां समां श्लक्ष्णां पूर्वभागोन्नतां[16] मनाक् ।
भुवं कुम्भावृतां कुर्याद्दैर्घ्ये[17] द्वारद्वयाङ्किताम् ॥ १६ ॥

१ A दा। २ D टा आरोमहर्षणाः। ३ D वं स। ४ D यद्दन्ति। ५ A न। ६ A दद्यात्। ७ D म्भी। ८ A र्धे F र्थै। ९ A त्र। १० A णाः। ११ D विचार। १२ D च। १३ A ल्प। १४ AF याद्दू। १५ A म्म। १६ A ता। १७ A र्घ्यै।

तोरणौ द्वौ प्रकुर्वीत द्वारयोः सुमनोहरौ ।
प्राङ्मुखोदङ्मुखो(खीं) वापि वाह्यालीं परिकल्पयेत् ॥ १७ ॥

पूर्वाभिमुखवाह्यालीदक्षिणं[2] मध्यभागतः ।
उपान्ते वृत्तिसंश्लिष्टं कुर्यादालोक्यमन्दिरम् ॥ १८ ॥

उच्चाधिष्ठान[3]मूर्द्धस्थं परिखा[4]परिवेष्टितम् ।
विशालं च सुरम्यं च पृष्ठभित्तिसमन्वितम् ॥ १९ ॥

सुधाधवलितै[5]स्तम्भैः काञ्चनैः परिशोभितम् ।
नानावर्णवितानाढ्यं काचकुट्टिमकल्पितम् ॥ ५२० ॥

परिखायां परिन्यस्तैः फलकैः कृतमार्गकम् ।
निःश्रेणीकल्पितारोहं वारणानां निवारणम् ॥ २१ ॥

गेहमन्यं प्रकुर्वीत परिखायास्तु वाह्यतः ।
ईषत्पश्चा[6]त्प्रदेशे तु दक्षिणं भागमाश्रितम् ॥ २२ ॥

परिखावेष्टितं तुङ्गं चित्रभित्तिसमन्वितम् ।
सुरम्यं सुविशालं[7] च परमण्डलिकाश्रयम् ॥ २३ ॥

आलोकमन्दिरस्याग्रे लालवेदीं[8](जालवेदीं) प्रकल्पयेत् ।
निखातैरष्टभिः स्तम्भैः पार्श्वद्वयनिवेशितैः ॥ २४ ॥

स्थूलदीर्घार्गलद्वन्द्वां[9] दृढकीलकधारितां[10]म् ।
द्विपवक्षःस्थलोत्सेधां पार्श्वयोर्गत(र्त)संयुताम् ॥ २५ ॥

अन्यामीदृग्विधां कुर्याद्वा[11]विनान्तोष(प)योगिना(नी)म् ।
पूर्वद्वारसमीपे तामुत्तरां दिशमाश्रिताम् ॥ २६ ॥

एवं लक्षणसंयुक्तां वाह्यालीं परिकल्प्य च ।
महत्तरेण विज्ञप्तः कृतदेवार्चनक्रियः ॥ २७ ॥

आघोष्य[12] डिण्डिमं राजा पुरवीथ्यां चतुष्पथे ।
तुन्दिलैर्गर्भिणां[13](णी) वृन्दैर्बालैः पादाङ्कुण्ठि[14]तैः ॥ २८ ॥

१ A F ल्या । २ A F णा । ३ A र्धभागस्थं । ४ A घा । ५ D तैः । ६ D त्पार्श्वात् F पाश्चात्य । ७ D लाक्षं । ८ D ण्डी F द्वंद्वाडां । ९ A न्दां । १० D धारितम् । ११ D वाचना । १२ D स्फाल्य । १३ D तं । १४ A कु ठि ।

न यातव्यं न यातव्यं[1] कौतुकाद्दर्शनोत्सुकैः ।
विषमा मत्तमातङ्गा मारयन्ति कृतान्तवत् ॥ २९ ॥

अन्यां च घोषणां कुर्याद्यः कश्चित्पादवेगवान् ।
धनलुब्धो द्विपस्याग्रे स धावतु स धावतु ॥ ५३० ॥

ततो भुक्त्युत्तरं[2] राजा प्रसाधनपरो भवेत् ।
कान्तानां च कुमाराणां भूषार्थं वस्त्रभूषणम् ॥ ३१ ॥

प्रस्थापयेद्यथायोग्यं सामन्तामात्य[3]मन्त्रिणाम् ।
आह्वाय्य[4] करिणो वाहान् स्वयं सम्भृतमण्डनः ॥ ३२ ॥

अलङ्कृतास्तथा राज्ञीस्तथान्या[5] भोगयोषितः ।
आरोहयेत्[6]समायाताः करिणीः स्वर्णपुष्पकाः ॥ ३३ ॥

मुक्ता[7]जालसमाकीर्णां पुष्पिकाकिङ्किणीयुताम् ।
पार्श्वघण्टाद्वयोपेतां सिन्दूरारुणमस्तकाम् ॥ ३४ ॥

चामरालङ्कृतश्रोत्रां वृत्तनक्षत्रमालिकाम् ।
ततः स्वयं समारोहेत्[8] करिणीं मृदुचारिणीम् ॥ ३५ ॥

पश्चिमाशोन्मुखे सूर्ये किञ्चिद्विगलितातपे ।
शनैः शनैर्व्रजन् गच्छेदिन्द्रभागे महीपतिः ॥ ३६ ॥

ततः सम्भाप्य वाह्यालीमुपवेश्य करेणुकाः ।
उत्तारयेत्ततः कान्ताः पुरस्ताच्च प्रवेशयेत् ॥ ३७ ॥

कुमारमण्डलाधीशसामन्तामात्यमान्यकान् ।
सेवकान्विविधानन्यानालोकेन प्रवेशयेत् ॥ ३८ ॥

ततः करेणोरुत्तीर्णः सुखासनमधिष्ठितः ।
विशेदवहितो राजा परिघासेतुमार्गतः ॥ ३९ ॥

निःश्रेण्याथ समारुह्य लीलया[9]लोकमन्दिरम् ।
सिंहासनमथारोहेत्कान्ताभिः परिवारितः ॥ ५४० ॥

१ A व्यां। २ A F क्तो। ३ A मान्य F न्मान्य। ४ D हूय। ५ D ह्रीत। ६ A यन्स। ७ F क्ताल A क्तामाला ८ A F गो। ९ A लाल।

ततः प्रवेशितान्सर्वान्यथार्हमुपवेशयेत् ।
वीरे[1]सूडध्वनिं श्रुत्वा प्रहर्षोत्फुल्ल[2]मानसः ॥ ५४१ ॥

गजाध्यक्षं समादिश्य परिकारान्समाह्वयेत् ।
प्रच्छादनपटच्छन्ना अन्तर्विहितमण्डनाः ॥ ४२ ॥

अ[3]हमहमिकाक्रान्ता विज्ञपेयुः पृथक् पृथक् ।
परिपृच्छे[4]त्ततो राजा तेषां धावनकारणम् ॥ ४३ ॥

अ(आ)वां मत्सरिणो(णौ) देव वयं कनककाङ्क्षिणः ।
मया द्वि[5]पासनं रुद्धमहं परिभवान्वितः ॥ ४४ ॥

प्रतिज्ञा[6]तु(तुं) समारूढो जवतोऽहं नराधिप ।
इति विज्ञाप्यमानस्तैर्यथायोग्यं समादिशेत् ॥ ४५ ॥

उत्तमो मध्यमो हीनस्त्रिविधः परिकारकः ।
एतेषां लक्षणं वक्ष्ये जवोत्कर्षात्पृथक् पृथक् ॥ ४६ ॥

प्रथमा द्विपभूमिः स्यात्मध्यमा नृपतेर्मही ।
तृतीया परिकारस्य भूमिरेवं त्रिधा मता ॥ ४७ ॥

प्रथमायां द्वितीयायां हस्तं निष्कासयन् भुवि ।
तृती[7]यायां परित्यज्य यो धावति स तू[8]त्तमः ॥ ४८ ॥

मध्यमस्य च नागस्य विधिना प्राक्त[9]नेन यः ।
पुरो धावति स[10] ज्ञेयो मध्यमः परिकारकः ॥ ४९ ॥

कनिष्ठस्य तु नागस्य प्रागुक्तविधिना तु यः ।
अग्रे धावति स[11] ज्ञेयः कनिष्ठः परिकारकः ॥ ५५० ॥

अग्रिमस्य पदाङ्कस्य पार्श्वा[12]त्यः पुरतो भवेत् ।
ज्ञेयः स उ[13]त्तमजवो वाजिनामपि घातकः ॥ ५१ ॥

दशधन्वा(न्व)न्तरस्थे(स्थं) वा पटी(रि)कारं जवाधिकम् ।
पञ्चाशदन्तरे हन्ति दन्त्यसावुत्तमो जवे ॥ ५२ ॥

---

१ A वार। २ D लोचनः। ३ A अहमहाकान्ता। ४ D च्छयेत। ५ A द्वीपा D द्विप्या। ६ D ज्ञातुमसौ। ७ A तीयां। ८ D उ। ९ D कृते। १० A वि। ११ A वि। १२ D श्वान्त्यः। १३ A डु।

पौरस्त्य[1]स्य पदाङ्कस्य पाश्चा[2]त्यो मध्यमो यदि ।
जवेन मध्यमो ज्ञेयो दन्ती ग[3]तिविशारदैः ॥ ५३ ॥

[4]अष्टधन्वा(न्व)न्तरगतमशीत्या परिकारकम् ।
यो हन्ति दन्ती स ज्ञेयो मध्यमो जववेदिभिः ॥ ५४ ॥

पूर्वस्य व(वा)रणाङ्कस्य भवेदर्धात्कु(र्वाक्तु)पश्चिमः ।
स कनिष्ठजवो ज्ञेयो वारणो वारणावरः ॥ ५५ ॥

पञ्चधन्व[5]न्तरगतं शतधन्वा(न्व)न्तराव[6]धि ।
परिकारं निहन्या[7]द्यः सदा हीनजवो गजः ॥ ५६ ॥

भूमित्रये भूद्वये च प्रथमार्यां तथा भुवि ।
वेगयुक्ता गजाः सत्वश्रेष्ठमध्याधमाः क्रमात् ॥ ५७ ॥

आह्वाय स्थापयेद्वाह्यं (ह्ये) तीव्रकोपपराङ्मुखम् ।
पाश्चा[9]त्यतोरणाभ्यर्णे मद(न्द)कोपं तु सम्मुखम् ॥ ५८ ॥

यावन्ती(तीं)भुवमाघातो या सङ्ख्या हस्तक[10]र्षणो(णी) ।
तथाधिक्याज्जयोऽन्यस्य हीने हीनः समे समः ॥ ५९ ॥

ग[11]जेन मत्स[12]री धावन् प्रविश्य जघनान्तिकम् ।
तर्जयेन्नि[13]जहस्तेन युध्यमानः प्रधावति ॥ ५६० ॥

भूमिद्वये तृतीयायां त्यक्त्वा गच्छति यो द्विप[14]म् ।
स जयी परिकारः स्याद्वारणस्तु पराजयी[15] ॥ ६१ ॥

[16]तुम्बिकां वा परित्यज्य वीथिं हित्वाऽन्य[17]तो व्रजेत् ।
सर्पवद्वापि य[18]ः सर्पधृ(र्पेद्धृ)तो[19] वा सम्पराजितः ॥ ६२ ॥

परार्थं धावमानस्तु जयी चेद्ध[20]नमाप्नुयात् ।
पराजये धनं नास्ति कुञ्जरेण हतो हतः ॥ ६३ ॥

---

१ A स्त । २ D पार्श्वान्त्यो । ३ D वारणो वारणोत्तमः । ४ These four lines are omitted in D । ५ A न्वा । ६ D धिपः । ७ A न्पा । ८ D न्तं । ९ D श्चान्त्य । १० D र्षणा । ११ D र्जने । १२ D रोयावत् । १३ F द्धस्ति । १४ D पः । १५ D यम् । १६ D कुंचितांकां वा । १७ A F न्त्यतो । १८ A F याः । १९ D द्वृत्तो । २० A द्धृत ।

जघने दन्तयोर्वापि कुर्याच्चूर्णेन लाञ्छनम् ।
मार्ष्टि वा तत्कृते चा[1]न्यः प्रतिज्ञाधावनत्त्विदम् ॥ ६४ ॥

प्रतिज्ञापारगो यः स्याज्जयस्तस्य प्रकीर्तितः ।
प्रतिज्ञापगमे वापि मारणे वा गजो जयी ॥ ६५ ॥

नृपभूमौ लिखेद्रेखां विंशत्या कार्मुके[2]र्भुवि ।
गजस्य धावतं[3]श्रान्तस्तिर्यग्यायी जयी भवेत् ॥ ६६ ॥

[4]लग्नश्च [5]यन्निषे[6]धाय धावको विजयी भवेत् ।
तयोरन्यतरस्यापि मारणे वारणो[7] जयी[8] ॥ ६७ ॥

युगप[9]द्धावतो पृष्ठे यस्य सीकरसङ्करः ।
जयं तस्य विजानीयात्तद्वधे हस्तिनो जयम् ॥ ६८ ॥

उत्तमो दन्तिनो भूमौ भूपभूमौ तु मध्यमः ।
कनिष्ठो निजभूमौ च स्थापनीयो यथाक्रमम् ॥ ६९ ॥

उत्तमो मध्यमं गच्छेन्मध्यमश्चाधमावधिम् ।
अधमो निजभूम्यन्तं धारयेयुर्गजं क्रमात् ॥ ५७० ॥

अनया परिपाट्यैवं निजां भूमिं नयञ्जयी ।
एवं कर्तुं न शक्नोति हतेऽस्मिन् वारणो जयी ॥ ७१ ॥

बद्धहस्तो यदा चोरः पुरो धावति हस्तिनः ।
गतापराधो जीवे[10]च्चेद्धतः पापात्प्रमुच्यते ॥ ७२ ॥

जवाधिकस्य [11]नागस्य वाजिनो धावनं पुरः ।
सीकराः सादिनः पृष्ठे निर्गतौ[12] सादिनो[13] जयः ॥ ७३ ॥

[14]वलयं दन्तिनो [15]दन्ती(न्ते) सादी [16]क्षिपति दन्तिनः ।
अन्यो हरति दण्डेन तत्राशक्तः पराजितः ॥ ७४ ॥

धावभेदाः समाख्यातास्तथा जयपराजयौ ।
इदानीं तु प्रवक्ष्यामि गजारोहणलक्षणम् ॥ ७५ ॥

---

१ A वान्यः । २ D के सु । ३ D नं श्रा A तश्चा । ४ A लग्न F गल । ५ A ल । ६ A धावको । ७ D णे । ८ A या । ९ D पद्व्यापनः पृष्ठो A वद्धा । १० D च्च अ F चेह । ११ A कान्त । १२ D तः । १३ D ध । १४ D चलनं । १५ F दिती । १६ A भिः ।

निषा[1]दी त्रिविधो ज्ञेयो रेखायुक्तिबलैर्युतः ।
अधमो मध्यमः श्रेष्ठः सर्वैस्तैरुत्तमोत्तमः ॥ ७६ ॥

गात्राभ्यामपराभ्यां च पार्श्वाभ्यामपि रज्जुभिः ।
कणा धृत्वा मुखे प्रोक्तं वृक्षादेरधिरोहणम् ॥ ७७ ॥

एतान्येवावरोहे स्युरापा[2]तः कर्णतो रै[3]णम्(णे) ।
एवं दशविधं प्रोक्तमवरोहणलक्षणम् ॥ ७८ ॥

प्रविश्यासनमुत्कृष्टं मध्यं मध्यसमासनम् ।
पादाग्रेणावकृष्टं स्यादासनं त्रिविधं स्मृतम् ॥ ७९ ॥

मन्दादिजातौ युद्धे च प्रोक्तमुत्कृष्टमासनम् ।
भद्रादिजातौ धावे च मध्यमासनमिष्यते ॥ ५८० ॥

अवाग्रे मृगजातौ तु शिरोविधृतितत्परे ।
अवकृष्टासनं शस्तं मातङ्गानां यथाक्रमम् ॥ ८१ ॥

समं दृढं च संलग्नं जानुसन्धिसमाहितम्[4] ।
आसनत्रितयेऽप्येवं सौष्ठवं परिकल्पयेत् ॥ ८२ ॥

गजस्य प्रेरणार्थं यत् पुरस्तादासनं वपुः ।
करोतु यन्ता प्रणिधेनां(धिर्ना)म्नासौ[5](सा)वनतो मतः ॥ ८३ ॥

अङ्कुशेन[6] त्वथो(धो) वाऽपि घातार्थं कुरुते वपुः ।
तिर्यग्वक्त्रं[7] स विज्ञेयः पार्श्वावनतसंज्ञकः ॥ ८४ ॥

आकृष्ट[8](ष्य) पृष्ठतो नागमुत्तानं कुरुते वपुः ।
यत्र यन्ता[9] स प्रणिधिः पृष्ठावनतनामकः ॥ ८५ ॥

गजस्य भयनाशार्थं कोपोपशमनाय च ।
सान्त्वनं क्रियते वाचा सा[10] भवेदुपलाघ(प)ना ॥ ८६ ॥

गजस्य शिक्षितं[11] भावं[12] क्रियया[13] यत्प्रभाषते ।
प्रज्ञापना[14]ख्यः प्रणिधिः स ज्ञेयो गजशिक्षकैः ॥ ८७ ॥

---

१ A पाथी F धादी । २ D या । ३ A तंरेण F तंरेणं । ४ D तः । ५ A नासौवनगतो F नासौवनतो । ६ A नारथवा F नरथावा । ७ A वक्रं । ८ D ष्टं । ९ A ग । १० D स्याद्भेद । ११ D तान् । १२ D वान् । १३ A यायां । १४ A रूया ।

वाचाभि[1]र्भत्सनं यत्स्याच्छिक्षार्थं सामजन्मनः ।
प्रणिधिस्तर्जनो नाम स प्रोक्तः सोमभूभुजा ॥ ८८ ॥

सृणिः प्रसार्यतेऽग्रे [2]यदातिक्षिप्तः स कथ्यते ।
पश्चादाकृष्यते यत्तु प्रतिक्षिप्तः स कथ्यते ॥ ८९ ॥

अङ्कुशो व[3]र्त्यते यत्र पार्श्वयोरुभयोरपि ।
प्र[4]र्हतो नाम स ज्ञेय आरोहणविशारदैः ॥ ५९० ॥

उत्क्षिप्य भ्रामणं[5] यत्तु सृणिः सूक्ष्मैः(क्ष्मः) स कथ्यते ।
[6]सृणेरधोमुखीभाव आदीर्णः प्रणिधिर्भवेत् ॥ ९१ ॥

शिरस(ः)स्पर्शमात्रं यदङ्कुशेन विधीयते ।
ईषत्पृ[7](त्स्पृ)ष्टः स विज्ञेयो घातः प्रणिधिकोविदैः[8] ॥ ९२ ॥

अर्धाङ्गुलं[9] निमग्नश्चेदङ्कुशः करिमस्तके ।
प्रणिधानाभिधो घातो विधेयानां विधीयते ॥ ९३ ॥

द्वित्र्यङ्गुलप्रमाणस्तु घातः पीडितको मतः ।
द्वाभ्यां कराभ्यामुत्क्षिप्य स घातः क्षि[10]प्तकः स्मृतः ॥ ९४ ॥

सृणिपार्श्वेन घातोऽयं भवेत्तारितकाभिधः ।
आरा[11]घातस्ततः प्रोक्तस्तोद इत्यभिधानतः ॥ ९५ ॥

आर[12]क्षा द्वादश प्रोक्ता सृणिघाताश्रया गजे ।
कुम्भाग्रे बिन्दुसंज्ञे तु तदधश्च वितानकैः(कौ) ॥ ९६ ॥

वितानयोर्बहिः पार्श्वा[13]ववग्राहावुदाहृतौ ।
वितानयो[14]स्ततश्चान्तर्निदानौ समुदाहृतौ ॥ ९७ ॥

कर्णाग्रशिरसः सन्धिः स्रोतःसन्धिरुदाहृतः ।
तदग्रे कर्णसन्धि[15]स्तु तत्पश्चात्कर्णमूलके ॥ ९८ ॥

पुरः सारयितुं नागमङ्कुशाग्रेण वेधनम् ।
कर्णमूले [16]तदत्रोक्तं तो[17]दनाम्ना विचक्षणैः ॥ ९९ ॥

---

१ D भिर्भ । २ A ग्रयं D ग्रन्था । ३ D र्त । ४ A F ह्र । ५ D यन् । ६ D omits these two lines । ७ D त्स्र । ८ A धैः । ९ D लनि । १० D प्र । ११ D धारघातस्ततःप्रोक्तस्तोदयत्यभि । १२ A राघातस्ततः प्रोक्तस्वेद इत्याश्रया । १३ A र्श्वांवग्रा । १४ D पत । १५ A न्धी तु । १६ D यद तुन्नो । १७ D तुन्नं नाम ।

अवग्रहे विताने च पश्चात्सांधयितुं गजम् ।
अङ्कुशाग्रेण यो घातः सोऽवकर्ष इति स्मृतः ॥ ६०० ॥

तिर्यग्विवर्तनार्थं तु कर्णसन्धौ[1] सृणेर्हतिः ।
निवर्तन इति ख्यातो गजारोहणकोविदैः ॥ १ ॥

मुखोत्क्षेपाय यत्कुर्यान्निदानेऽङ्कुशघातनम् ।
उत्कर्णक[2] इति[3] ख्यातः सृणिकर्मविचक्षणैः ॥ २ ॥

पादयोः प्रणिधौ सद्यं[4] कलापस्य निपीडनम् ।
बहिर्मुखे च कर्तव्ये यन्तुः पादतले दृढे ॥ ३ ॥

दृढं पूरयितुं गाढमङ्गुष्ठाभ्यां प्रपीडयेत् ।
आकर्षणाय[5] पाणिभ्यां स्थितं[6] य(तम)[7]वंनिपीडनम् ॥ ४ ॥

वामतः प्रेरणे[8] घातो[9] दक्षिणेन पुनर्भवेत् ।
वामेनाङ्गुष्ठयोगेन दक्षिणेन निवर्तयेत् ॥ ५ ॥

अधोमुखं विधातुं तं कुञ्जरं[10] यदि वाञ्छति ।
निम्नाङ्गुष्ठौ विधातव्यौ ताभ्यामेव प्रपीडनम् ॥ ६ ॥

ऊर्ध्वाननं गजं गतुं यन्ता प्रेप्सुर्भवेद्यदि ।
उन्नताङ्गुष्ठयोगेन[11] प्रोन्नयेद् द्विरदाननम् ॥ ७ ॥

अङ्कुशो[12]त्क्षेपमात्रेण यो विद्या[13]दिङ्गितं[14] गजः ।
अन्त्य[15]वेदी स विज्ञेयः सङ्कीर्णोऽयं मतङ्गजः ॥ ८ ॥

अङ्कुशेन तु दण्डेन चर्मणि[16] स्मृत (स्पृष्ट) एव यः ।
द्विरदो वेत्ति यः कृत्यं मृग उत्तानवेदितः[17] ॥ ९ ॥

असृक्स्रावे च[18] हननं वेत्ति कृत्यं चिरेण यः ।
गम्भीरवेदी विज्ञेयो मन्दो नाम मतङ्गजः ॥ ६१० ॥

प्रहारस्यानुरूपेण यो जानाति वधावधम् ।
अन्वर्थवेदी विज्ञेयो भद्रजातिर्वरो गजः ॥ ११ ॥

---

१ D त्सन्ध । २ D र्णंइ । ३ D F विख्यातः । ४ A द्यः F न्द्यं । ५ A णंयप्रा । ६ DF स्थिय । ७ D F घ । ८ A णो । ९ F A तः । १० D रो । ११ A योचे । १२ D शक्षे । १३ D न्द्या । १४ A F तो । १५ A F अत्य । १६ A व । १७ A F ता । १८ F A हनान्येति कृत्या ।

घृतो धावति चात्यर्थं प्रेरितस्तु[1] न गच्छति ।
अत्यर्थवेदी विज्ञेयो व्यालो मिश्रगजो मतः ॥ १२ ॥

एकः प्रसारितः पादस्तदन्यो नतजानुकः ।
पार्श्वा[2]त्यमासनं ज्ञेयमेकजान्वानतं बुधैः ॥ १३ ॥

प्रसारिताभ्यां पादाभ्यामा[3]ततोभयजानुकम् ।
उत्कुण्डे[4] (त्कट)उत्कटं ज्ञेयं पश्चिमं कुञ्जरासनम् ॥ १४ ॥

वंशस्योभयपार्श्वे यत्संहते नतं[5]जानुनी[6] ।
मण्डूकासनमेतत्स्यादू[7]र्ध्वसङ्ग्रामकर्मणि ॥ १५ ॥

एकमुत्कटकं पादमन्यच्च नतजानुकम् ।
य[8]त्करोति नरः(गजः) पृष्ठे तत्कूर्मासनमुच्यते ॥ १६ ॥

यो धू(यद्धू)तविधूतो (धुतौ) शस्तमुभयानतजानुकम् ।
एकजानुनतं चैकमासनं धावकर्मणि ॥ १७ ॥

कूर्ममुत्क[9]टकं चैव लील[10]यानं(ने)प्रशस्यते ।
आसनं तूर्ध्वसंज्ञं यत् सङ्ग्रामे तद्विधीयते ॥ १८ ॥

सन्निधि[11] यावदा[12]याति परिकारो गजस्य हि[13] ।
यन्त्रा तावन्न मोक्तव्य[14] सृणि[15]ः पार्ष्णिनिबन्धनैः(नी) ॥ १९ ॥

[16]गजं धावयते य[17]स्तु परिकारस्य पृष्ठतः ।
दृष्ट्या तल्लक्षया भाव्यं लक्षयेच्च जवक्षयम् ॥ ६२० ॥

आकुलं य[18]दवेक्षेत निम्नपृष्ठो[19] भवेदपि ।
जडपादगतिर्वापि ज्ञेयो[20] नष्टगजस्तथा ॥ २१ ॥

नष्टस्य चेष्टितं ज्ञात्वा त्रिकान्दोलनकै[21]र्भृशम् ।
प्रेरयेद्वारणं यत्नो[22]द्यथासौ हन्यते द्रुतम् ॥ २२ ॥

[23]पातितः परिकारश्चेत्करिणा करताडनैः ।
धारयेदङ्कुशाकर्षधारणं मारणोद्यतम् ॥ २३ ॥

---

१ D स्तनु वांछिती । २ D श्वान्त्य ।। ३ D न । ४ A ण्डे मु । ५ A तु । ६ A F नि । ७ D र्ध्वं । ८ D omits these two lines । ९ A टित । १० D ल्यान । ११ A धियाँ । १२ A प । १३ D च । १४ D व्यः । १५ A णि पार्श्वेष्णि F श्वेष्णि । १६ D गजो A गजं धावयतो । १७ A न्तुः । १८ दिवीतेतं । १९ A F ष्टे । २० A येज्ञो जव स्तथा । २१ A कोभृ । २२ A यत्नाद्य । २३ A F प ।

यदाङ्कुशं तिरस्कृत्य दन्ताभ्यां परिकारकम् ।
मारयेत्तिसिन्धुरस्तस्य जयो यन्तुः पराजयः ॥ २४ ॥

परिकारो नखाग्रे[1] चेत्परितो न्यस्तविग्रहः ।
उपायस्तत्र कर्तव्यो धावनीयो[2] गजो भृशम् ॥ २५ ॥

धावतो वारणेन्द्रस्य भवेद्यदि[3] नखाहतिः ।
तदा पराजयो न स्यादशक्यत्वान्निर्षादिनः[4] ॥ २६ ॥

परिवृत्य यथा नागः पादैर्मृद्नाति[5] भूतले[6] ।
पराजयस्तदा[7] ज्ञेयो महामात्य(त्र)स्य निश्चितम् ॥ २७ ॥

व्यालं क्रूराशय(यं)प्राप्तमवस्थामतिवर्तिनी (नीम्) ।
परीक्षार्थं महीपालस्तं[8] प्रयत्नात्समानयेत् ॥ २८ ॥

वाचाङ्कुशेन पादाभ्यां दुर्निवारो मतङ्गजः ।
आरूढकातिगो यस्मादनारूढंगजो[9] मतः ॥ २९ ॥

तस्मात्तादृग्विधं नागं मुखपट्टावृतेक्षणम् ।
वस्त्रोदक(र)समाकीर्णा(र्ण)[10]कर्णद्वितयरन्ध्रकम् ॥ ६३० ॥

आरोहैस्ते(हैस्तै)[11] हयारूढैः सादिभिः परिवेष्टितम् ।
कृतान्तमिव दुर्धर्षं वाह्यालीभूमिमानयेत्[12] ॥ ३१ ॥

वीरैस्तूर(ड)[13]रवं भूरि कारयेत्तस्य दूरतः ।
द्वारप्रवेशनात् पूर्वमादिशेत् परिकारकम्[14] ॥ ३२ ॥

अपसार्य हयारोहानुत्सृजेत्कर्णकन्दुकौ ।
मुखपट्टं समुत्क्षिप्य परिकारं प्रदर्शयेत् ॥ ३३ ॥

उद्घाटितस्तब्धकर्णो[15][16] निपीड्य चिबुकस्थलम् ।
करं प्रसार्य पुरतः पुच्छमुन्नम्य कोपतः ॥ ३४ ॥

संरम्भेण जवाधिक्यात्परिकारमनुद्रवेत् ।
स्वमेनं[17] इ( भ्रान्तमि)त्र सम्प्राप्य जिघांसं(सुः) परिकारकम् ॥ ३५ ॥

१ D म । २ D ने । ३ A ति । ४ A F ख । ५ A F मुंद्राति । ६ D लम् । ७ A स्दा । ८ A महीस्तं । ९ A ढायते त । १० A र्णे द्वि तय । ११ A हास्ते D हास्तै F हस्ति । १२ D यन्
१३ D omits this line । १४ D चा । १५ A चटि । १६ D र्णौ । १७ A त ।

अश्वसादिभिराक्रान्तस्त[1]्यक्त्वा तं परिकारकम् ।
अश्वान्नभिद्रवन्नागः सर्वेषां भयकारकः ॥ ३६ ॥

निहत्याश्वं ततः सर्वान् प्रेक्षकान् समुपाद्रवन् ।
सम्प्राप्य च ततः पादैः कांश्चित्सम्परिपेषयेत् ॥ ३७ ॥

नखाघातैस्ततः कांश्चित्कांश्चिद्दन्तावभेदनैः ।
शुण्डाप्रहारणैः कांश्चित्कांश्चित्पाषाणपातनैः ॥ ३८ ॥

वृक्षारूढांस्तथा कांश्चित्कां[3]श्चिद्दन्ताभिहन(घात)नैः ।
गर्तप्रविष्टकान् कांश्चिच्छुण्डयो[4]त्क्षिप्य मारयेत् ॥ ३९ ॥

संहारभै[5]रवप्रख्यो मृत्युर्मातङ्गविग्रहः ।
र[6]थानश्वान्नरानुष्ट्रान् मारयेदवितन्द्रितः ॥ ६४० ॥

एकतः करिणीयूथमन्यतो हयवृन्दकम् ।
नराणां युगलं तस्मिन् सङ्गतं नैव दृश्यते ॥ ४१ ॥

निर्जन्तुकं तदा जातं वाह्यालीभूमिमण्डलम् ।
कथञ्चिन्नीयते कृच्छ्रात्सादिभिस्तोत्रपाणिभिः ॥ ४२ ॥

प्रवर्तयेत्ततो युद्धं गजानामनुरूपतः ।
कायेर्न घातनैः शक्त्यां वयसा सत्त्वजातितः ॥ ४३ ॥

निष्टम्भवे[10]त्क(वान्क)मठवे[11]द्वारकश्चादिकोलवत् ।
कर्मबन्धे[12]परित्यक्तो भीमवच्च बलाम्बितः ॥ ४४ ॥

चतुर्दशरदाघातैः[13] परां परिणतिं गतः ।
युद्धकर्मप्रविष्टोऽयमजेयः प्रतिकुञ्जरैः ॥ ४५ ॥

तिर्यगुन्नतघातो यः परिलेखः स उच्यते ।
तल्लेखं तु विजानीयादूर्ध्वघातं तु[14] दण्डवत् ॥ ४६ ॥

स्त्रे(खे) दन्तद्वितयान्तस्थं व[15]दनं प्रतिदन्तिनः ।
कृत्वा यः(यत्)पीडनं तस्य स घा[16]तः कर्तरी[17] मतः ॥ ४७ ॥

१ D तत्कान्त । २ D पेषणैः । ३ D दन्ताभिहननैस्तरोः । ४ D याकृष्य । ५ A भैरव । ६ D अश्वरत्नमुष्ट्ररत्नं । ७ D था । ८ A तद्या । ९ A ल्या । १० A वा । ११ A द्वा । १२ A न्धा । १३ A घाते परि । १४ A तु । १५ A वदनन्तिनः । १६ A द्या । १७ A रि ।

दन्तवेष्टतले घा[1]तस्तलघातः स कथ्यते ।
अधस्ताद्दन्तघातः स्यात्तस्माच्च तल[2]घातनम् ॥ ४८ ॥

वदनं तिर्यगुन्नम्य प्रहार[3]स्त्वजघातनम् ।
प्र(अ)जाघाते तु वदनात्ति(नन्ति)र्यगुन्नम्य घातयेत् ॥ ४९ ॥

प्रतिमाने प्रतिमानं रदनं दन्तवेष्टयोः ।
विधाय लोडनं यत्तु द[4]न्तघातः स उच्यते ॥ ६५० ॥

शिरस्तिर्यक् समाकृष्य दन्तेनैकेन हन्ति यत् ।
प्रतीद्वी(तिद्वि)पप्रती(ति)मानं सूचीघातः स उच्यते ॥ ५१ ॥

दन्ताभ्यां दन्तघातेन शकलानि पतन्ति यत् ।
ताडकाघा[5]त इत्येषं[6] कथितो घातकोविदैः ॥ ५२ ॥
लीलावेल्लीं[7](ल्लां) समारुह्य गात्राभ्यामतिकोपनः ।
हन्ति यत्सिंहवन्नागं स घातः सन्धितो मतः ॥ ५३ ॥

अपेत्य गात्रं सङ्कोच्य[8] पश्चादुत्पत्य मेषवत् ।
हन्ति दन्ती प्रतीभं यत् स निर्घातः प्रकीर्तितः ॥ ५४ ॥

तथा कार्यौ[9] द्विपौ[10] यत्नाद्यथा न समपार्श्वकौ ।
भवेतां मत्तमातङ्गौ न स्यात्ति[11]र्यग् यथा[12]सु(मु)खम्[13] ॥ ५५ ॥

गजं[14](जं)सम्मुखमान(ना)य्य स्वगजाल्लो(जंलो)ठयेत्ततः ।
पश्चात्पृ[15](स्पृ)ते प्रतिगजे स्वगजं वात्र(चाप) कर्षयेत् ॥ ५६ ॥

गजाध्यक्षं[16]महामात्रं[17]परिकीर्यं[18]निषादिनाम्[19] ।
वादिनां वि[20](वी)रसूडस्य धावतां हयसादिनाम् ॥ ५७ ॥

वासांसि काञ्चनं भूरि स्वर्णभूषणकान्यपि ।
प(पा)रितोष(षि)कदानेन कुर्यान्मुदितमानसान् ॥ ५८ ॥

कदाचित्स्वयमारोहेद्द्विधेयभटलक्षणे(णम्) ।
विनोदार्थं महीपालो जननेत्रोत्सवाय च ॥ ५९ ॥

१ A घ । २ A लघातम् । ३ A र–जघा । ४ D वृथा । ५ A घाइ । ६ D षः । ७ D ल्लीं । ८ D त्रसङ्कोचं । ९ D र्यौ । १० D पौ । ११ A स्य । १२ A या । ३ A ष । १४ D त । १५ D न्मृ । १६ D क्षं । १७ D त्रं । १८ D कृत्वा । १९ D नं । २० A चि ।

ततः समागतान् सर्वान्यथामानं वि[1]सर्ज्य च ।
करेणुकां समारुह्य प्रविशेद्राजमन्दिरम् ॥ ६६० ॥

उक्तोऽयं गजवाह्यालीविनोदः सोमभूभुजा ।

॥ इति गजवाह्यालीविनोदः ॥ ३ ॥

साम्प्रतं वाजिवाह्यालीविनोदः प्रति[2]पद्यते ॥ ६१ ॥

पूर्वं भूमिं परीक्षेत वाह्यालीहेतवे नृपः ।
अकर्द[3]मामपाषाणां गर्तशङ्कुविवर्जिताम् ॥ ६२ ॥

न मृद्वीं नातिकठिनां प्रागुदीची[4]प्लवां शुभाम् ।
विशालां सुस(ष)मां श्लक्ष्णां [5]वाह्यालीं कारयेन्नृपः ॥ ६३ ॥

शतधन्व(न्व)न्तरमितां चतुरस्रां समन्ततः ।
वृत्तिसंवेष्टितां द्वारद्वितयेन समन्विताम् ॥ ६४ ॥

उत्तरप्रान्तदेशे वा समीरस्यानुकूलतः ।
दक्षिणप्रान्तदेशे वा कुर्याद्दर्शनमण्डपम् ॥ ६५ ॥

रचयित्वा तु वाह्यालीं विज्ञप्तो गृहकार[6]कैः ।
[7]समाहूय हयाध्यक्षमश्वानयनमादिशेत् ॥ ६६ ॥

समानीतांस्ततो वाहानवलोक्य महीपतिः ।
तेषां जातीः परीक्षेत देशनामाविभेदतः ॥ ६७ ॥

आवर्तवर्णसत्त्वानि छायागन्[8]धगतिस्वराः ।
आकारश्चाष्टधाऽश्वानां श्रेष्ठमध्यकनीयसाम् ॥ ६८ ॥

काम्बोजयव[9]नास्तेजी बा[10]ह्लीकाश्चा[11]तैलास्तथा ।
तोरु[12]खारकाः सकेकाणा एते सप्तोत्तमोत्तमाः ॥ ६९ ॥

पो[13]द्दाराः कान्दलेयाश्च यौधेया [14]वाजपेयकाः ।
[15]वनायुजाः पारसीकाः षडेते चोत्तमा हयाः ॥ ६७० ॥

तैत्तिला वत्स[16]कान्धारा [17]वामतेया ससैन्धवाः ।
सावित्राः पार्वतेयाश्च काश्मीराः [18]साम्बतीयकाः ॥ ७१ ॥

१ D सृज्य । २ D तिकथ्यते । ३ A मांपा । ४ A चीं । ५ A कारयेद्धरणी । ६ AF राके । ७ A समाय । ८ D न्धि । ९ D न । १० A ह्ली । ११ D तु । १२ A कवा । १३ D योद्धारः । १४ D त्रा । १५ D वा । १६ A द्य । १७ A नावार्मतेय । १८ A मध्यमा हयाः ।

तेजी[1]कुलजनीहारसारस्वततु[2]रुष्ककाः ।
चतुर्दशैते वाहेषु मध्यमाः परिकीर्तिताः ॥ ७२ ॥

मेदका आर्जुनेयाश्च त्रैगर्ता गु[3]र्जरास्तथा ।
राजसा[4]वन्त्यसौराष्ट्राः पारियात्राः सहा[5]रकाः ॥ ७३ ॥

दुग्धवा[6]टाः स्तब्धवाटाः कनिष्ठा द्वादश स्मृताः ।
तँत्राप्येकोऽतिकष्टः स्यात्स्तब्धवादी(ट)समुद्भवः ॥ ७४ ॥

षड्विंशतिविभेदाः स्युः राज्ञा ने(ज्ञे)यास्तुरङ्गमाः ।
न जायन्ते कलौ यस्मात्तस्मान्न गणिता मया ॥ ७५ ॥

जलावर्तवदावर्तो मुकुलो मुकुलाकृतिः ।
शुक्तिः शुक्तिसमाकारो गोलीहा(जिव्हे)वावला(ली)ढकः ॥ ७६ ॥

शतपद्यभिधा ज्ञेया शतपद्या समाकृतिः ।
पादुका पादुकाकारस्तदर्धै[10]स्त्वर्धपादुकाः(का) ॥ ७७ ॥

ब[11]ह्वावर्तसमायोगः स[12]म्पातः परिकीर्तितः ।
अष्टौ भेदाः समाख्याता आवर्ता[13]नां मनीषिभिः ॥ ७८ ॥

द्वावुरस्यौ शिरस्यौ द्वौ द्वौ(द्वौ)रन्ध्रोपरन्ध्रयोः ।
एको भाले प्रमाणेन(पाणे च)ध्रुवावर्ता दश स्मृताः ॥ ७९ ॥

स्यान्निगाले देवमणिस्तद[14]धो रोचमानकः ।
कण्ठा[15]वर्तस्तयोर्मध्ये प्रशस्ता[16]स्ते विशेषतः ॥ ८० ॥

ललाटे सृक्कणो[17]र्बा[18]ह्वोस्त्वचि केशान्तयोस्तथा ।
वक्षःस्थले कर्णमूले शुभावर्ताः प्रकीर्तिताः ॥ ८१ ॥

श्वे[19]तः कृष्णोऽरुणः पीतः शुद्धाश्चत्वार एव हि ।
मिश्रास्त्वनेकधा वर्णास्तेषां भेदः प्रव[20]क्ष्यते ॥ ८२ ॥

केशा वा[21]लाश्च रोमाणि व[22]र्म चैव खुरास्तथा ।
श्वेतैरेतैर्भवेदश्वः क[23]का(र्का)ह्वो विप्रजातिजः ॥ ८३ ॥

---

१ A साम्वती । २ D चतुष्कलाः । ३ FA गू । ४ D म्वष्टका । ५ A आहराः । ६ A टा... F यस्तथवायः । ७ D adds this line । ८ D टूत्रि । ९ D लीहावाहावली । १० A परिकीर्तितः । ११ A वोह्वावर्त । १२ A सयातः । १३ A तमि । १४ D दा । १५ A ङ्क । १६ D स्तश्च । १७ D णौ । १८ A बांहो । १९ A त । २० D च । २१ A का । २२ D च । २३ D का ।

पूर्ववत्सर्वशुक्लाङ्गस्त्वचा कृष्णो[1] भवेद्यदि ।
वर्णनाम्ना स विज्ञेयः कत्तलोऽयं तुरङ्गमः ॥ ८४ ॥

लोमभिः केशवालैश्च त्वचा कृष्णः[3] खुरैरपि[4] ।
काल इत्युच्यते वाजी शूद्रः शौर्याधिकस्तथा ॥ ८५ ॥

केशप्रभृतिवालान्तः(न्त)सर्वाङ्गे[5] रोहितो यदि ।
कर्पाह इति विख्यातः क्षत्रजातिस्तुरङ्गमः ॥ ८६ ॥

केशैस्तनुरुहैर्वालैः काञ्चनाभैस्तुरङ्गमः ।
सेराह इति विख्यातो वैश्यजातिसमुद्भवः ॥ ८७ ॥

सितलोहितरोमाणि सर्वाङ्गे मिश्रितानि च ।
मुखाङ्घ्रिवालकेशेषु लोहितश्चोर उच्यते ॥ ८८ ॥

केशवालाङ्घ्रितुण्डे च मेचको रुरुसन्निभः ।
नील इत्युच्यते वाजी सितकृष्णे तनूरुहे[10] ॥ ८९ ॥

पाटलीपुष्पसङ्काशा(शो) नलकेषु सितेतरः ।
कृष्णग्रन्थिकया[11](पा)हो[12]श्वः [13]सङ्ग्रामे विजयप्रदः ॥ ६९० ॥

मधूकवल्कलच्छायो मोह इत्युच्यते हयः ।
पक्वजम्बूफलच्छायो जम्बु[14] इत्यभिधीयते ॥ ९१ ॥

केश[15]वालेषु पीतश्च[16] लोहितो हरितो मतः[17] ।
[18]उन्दुरेण समच्छायः[19] सं[20]प्त(प्ति)रुन्दीर उच्यते ॥ ९२ ॥

[21]केशकेसरपुच्छे च जानुनोऽधश्च[22] मेचकः ।
सर्वाङ्गलोहितैः पीतै[23]रुराहः कथ्यते हयः ॥ ९३ ॥

शेष(शोण)स्तेष्वेव देशेषु सर्वाङ्गे किञ्चिदुज्वलः ।
रक्तरेखा[24]ङ्कितः पृष्ठे गांण्ठि[25](मण्ठ)वर्णस्तुरङ्गमः ॥ ९४ ॥

येन केनापि वर्णेन[26] मुखे पुच्छे च (पादेषु) पाण्डु[27]रः ।
पञ्चकल्याण[28]नामा[29]यं भाषितः[30] सोमभूभुजा ॥ ९५ ॥

---

७ A लक्षणं यस्तु।
१ A ष्णा । २ A एतन्ना । ३ A कृष्टः । ४ A ख । ५ A ङ्गैरा । ६ D वा । १३ D सुयुद्धविजयावहः ।
८ A सितष्णे । ९ A नु । १० A हि । ११ A न्धि । १२ D हेश्व । २० D स उन्दुर ।
१४ A ब । १५ A लोह । १६ A श्चेलो । १७ D सि । १८ A अदुम्बर । १९ A य । २५ A गंवि F गंठिक ।
२१ D यः केसरसमः पुच्छे । २२ A स्तु । २३ D कहाहः । २४ A मेषीक्त ।
२६ D पु । २७ A ण्ड । २८ A ल्या—नामा । २९ D माच । ३० D सोमभूपेन भाषितः ।

केशेषु वदने पुच्छे वंशे पादे[1]षु पाण्डुरः ।
अष्टमण्ठों[2](ङ्ग)लनामा च सर्ववर्णेषु शस्यते ॥ ९६ ॥

श्वेतः सर्वेषु पादेषु पादयोर्वापि यो भवेत् ।
धौतपादः स विज्ञेयः प्रशस्तो मुख[3]पुण्ड्रकः ॥ ९७ ॥

विशालैः पट्टकैः श्वेतैः स्थाने स्थाने विराजितः ।
येन केनापि वर्णेन [4]हलाह इति कथ्यते ॥ ९८ ॥

चित्रितः पार्श्वदेशे च श्वेतबिन्दुकदम्बकैः ।
यो वा को वा भवेद्वर्णस्तरङ्गः कथ्यते हयः ॥ ९९ ॥

सितस्य बिन्दवः कृष्णाः स्थूलाः सूक्ष्माः समन्ततः ।
दृश्यन्ते वाजिनो यस्य पिङ्गलः स निगद्यते ॥ ७०० ॥

श्वेतस्य सर्व[5]गात्रेषु श्यामला मण्डला यदि ।
एके तं बहुलं प्राहुरपरे मलिनं बुधाः ॥ १ ॥

अङ्गात्[7]मकोपि(ऽति)मेधावी दि[6]व्याचारो मिताशनः ।
अलङ्कारसहो गीतमानपूजाप्रियः सदा ॥ २ ॥

उत्क्षिप्य पादं [8]प्रद्रावी शुचिशय्यासनप्रियः ।
सोऽयमुत्तमसत्वः स्याच्छोभनाङ्गस्तुरङ्गमः ॥ ३ ॥

पारावतगलाभासः शक्रचापसमद्युतिः ।
छायेयं पार्थिवा ज्ञेया हयरोमसमाश्रिता ॥ ४ ॥

मुक्तास्फटिकसङ्काशा छायेयं वारिजा शुभा ।
बालार्कपद्मरागाभा छायेयं तैजसी स्मृता ॥ ५ ॥

क्षीरैः समासमा गन्धस्वेदादिषु शुभा हयाँ[10]ः ।
[11]शुभद्वीपे च हंसे च शिखितित्तिराटिट्टिभैः ॥ ६ ॥

गत्या [12]समाना ये वाहा [13]सादिनान्ते सुखावहाः ।
बाहुमूले जानुसन्धौ गमने यस्य वक्रता ॥ ७ ॥

१ A च। २ A रा। ३ A मुद्रकः। ४ A omits this Pâda। ५ D त्माकोप। ६ A चोक्षा। ७ D प्रज्ञा। ८ D जी। ९ A भो। १० A यः। ११ A शिरसि द्विणि। १२ A ससमाना। १३ A हादिनान्ते।

प्रसारणं च पादानामुच्चाङ्घ्रिः स वरो रणे।
सन्धित्रयेऽपि[1] पादानां नतत्वं गमने यदि॥ ८॥

वक्रपादस्तुरङ्गोऽयं विनोदेषु प्रशस्यते।
द्रुतं क्षिपति पादांश्चेद्वक्रपादस्तुरङ्गमः॥ ९॥

समपादो विनोदेषु प्रेक्षकाणां मनोहरः।
नातीवोच्चैर्नातिनम्रैः पादैर्याति तुरङ्गमः॥ ७१०॥

मध्यपादः स विज्ञेयः प्रशस्तः समराङ्गणे।
वक्रता मणिबन्धेषु[2] दृश्यते यस्य वाजिनः॥ ११॥

नीचपादः स विज्ञेयः प्रशस्तोऽध्वगतौ हयः।
पादानां दृश्यते यस्य स्तब्धता सर्वसन्धिषु॥ १२॥

अध्वन्येवोपयोग्योऽसौ स्तब्धपादस्तुरङ्गमः।
गम्भीरोऽस्खलितः स्निग्धो मधुरः श्रुतिकोमलः॥ १३॥

ध्वनिः प्रशस्यतेऽश्वानां स्वामिनो[3] विजयावहः।
निर्मांसमायतं वक्त्रमक्ष्णोर्मध्ये समुन्नतम्॥ १४॥

निर्व्यलीकेन भावेन वाहानां शस्यते मुखम्[4]।
श्वेते कृष्णे पिशङ्गे वा मल्लिकाकान्तिसन्निभे॥ १५॥

वैडूर्यस्फटिकच्छाये पुष्परागसमप्रभे।
एणोष्ट्रटिट्टिभक्रौञ्चहंसलोचनसन्निभे॥ १६॥

प्रशस्ते[6] लोचने यस्य वाजिनस्ते शुभावहाः।
ओष्ठौ[7] मुखं सृक्कणी च सूना प्रोथस्तनुर्मृदुः॥ १७॥

स्तब्धावलोमशावन्तर्नागवल्लीदलोपमौ।
ह्रस्वौ कर्णौ शुभौ शीर्षं कपित्थफलसन्निभम्॥ १८॥

स्कन्धः[8] पीनो दृढः शस्तो ग्रीवा केकिगलोपमा।
वक्षो वृत्तं विशालं च स्थूलावंसौ[9] सुविस्तृतौ॥ १९॥

१ A वाहासादिनां। २ D ऽपि। ३ D नां। ४ A सु। ५ A स ५ D स्त। ७ D ष्ठो।
८ D वा। ९ D शौ।

क्रोडं सुनिबिडं शस्तं बाहू वृत्तौ[1] सुदीर्घकौ ।
समानं वर्तुलं जानुयुगलं गूढगुल्फकम् ॥ ७२० ॥

जङ्घे दीर्घे च निर्मांसे तथा गूढशिरे मते ।
मणिबन्धौ तथा ह्रस्वौ स्तब्धौ चैव शुभावहौ ॥ २१ ॥

खुराः ख[3]रखुराकारा रेखावलिविवर्जिताः ।
अन्तः कुहरसंयुक्ता अभिन्नाश्चैव कर्णिकाः ॥ २२ ॥

इषन्नम्रः पृष्ठवंशो ह्रस्वो मांसैः सुले[4]पितः ।
पार्श्वे दीर्घे समे वृत्ते समुद्बद्धं तथोदरम् ॥ २३ ॥

अरोमशौवेककणौ(वर्णौ)[5]वृषणौ वतू(तु)लौ लघू ।
ह्रस्वं च मेहनं शस्तं सुसंलग्नौ तु पिण्डकौ ॥ २४ ॥

वृत्तं विशालं जघनं प्रच्छन्नं च गुदं वरम् ।
सुदीर्घैर्बाहुभिर्वालैः पुच्छं मग्नं प्रशस्यते ॥ २५ ॥

उपान्तौ विकटौ शस्तौ ऋजुपीने च सक्थिनी ।
हस्वौ कूर्चौ स्मृतौ तेषां जङ्घाकाण्डौ च पूर्ववत् ॥ २६ ॥

कँक्षायां पुल(लि)ने द्वार्ल्पा(द्वीपे) मध्यखण्डे तथोपरि ।
पञ्चस्वेतासु धारासु धावन्सत्त्वेन संयुतः ॥ २७ ॥

पञ्चम्यामपि धारायां[9] लोहमास्यगतं हयः ।
अनवष्टंभ्य यो धावत्यस्ख[11]लंश्चलवा[12]लधि(धिः) ॥ २८ ॥

अनु[13]त्प्लुत्यावतिष्ठेत ध्रियमाणस्[14]ततो भृशम् ।
स भवत्युत्तमप्राण इतरौ मध्यमाग(ध)मौ[15] ॥ २९ ॥

रोमस्वपि मनाक् स्पर्शं पार्ष्णिभ्यां सहते न च ।
[16]ऊरुसंवलनं बाह्वोरुक्षे(त्क्षे)पं जवि(व)नो[17] हयः ॥ ७३० ॥

पार्ष्णिसंस्पर्शमात्रेण रागासँ(त्स)म्पीडनेन च ।
[19]वेला(ल्ग)या ज्ञापनेनैवं[20] धावन्नन्तरपैत्तिकैः[21] ॥ ३१ ॥

१ A त्तौ. दी । २ A ब । ३ A खु । ४ D मेलि । ५ D सादकौ । ६ D वर्तुलौ च सदा लघू । ७ D वी । ८ D नद्रा । ९ A या । १० D त्पृष्ट । ११ A स्व । १२ A चा । १३ D श्रु । १४ D णेत । १५ A मो । १६ A उ । १७ A पथि । १८ A सपी । १९ D वल । २० A ववधा । २१ D तम्र ।

पार्ष्णिसङ्घट्टनै[1][2]र्गाढैः कशाघातैः सुनिष्ठुरैः ।
आराखाञ्चनकैर्गच्छन् अश्वो मंहः[3] प्रकीर्तितः[4] ॥ ३२ ॥

धन्वन्तर[5]शतं गत्वा पुनरागच्छति द्रुतम् ।
मात्रा षोडशकेनाश्वो भवेदुत्तमवेगवान् ॥ ३३ ॥

चतुर्विंशतिमात्राभिर्मध्यवेगस्तुरङ्गमः ।
द्वात्रिंशता तु मात्राभिर्हीनवेगस्तुरङ्गमः ॥ ३४ ॥

वितस्तिसप्त[6]कोत्सेधः खुरान्तात्कीकसावधिः ।
परिणाहे तथा दैर्घ्ये दश सार्धा वितस्तयः ॥ ३५ ॥

वक्रपुण्ड्राः छिन्नपुण्ड्राः कृष्णो(ष्णौ)ष्ठपुटतालुकाः ।
लग्नप्रोथा दीर्घकर्णा ह्रस्वगण्डोत्तरो(रौ)ष्ठकाः ॥ ३६ ॥

करालतीक्ष्णदंष्ट्राश्च गृध्रकाकविलोचनाः ।
स्कन्धे बहु[10]वलीकाश्च तथा हीनस्वरान्विताः[11] ॥ ३७ ॥

वक्रमेढ्राश्चित्रकर्णा लम्बमुष्कास्तुरङ्गमाः ।
घनकुञ्चितवालाश्च विज्ञेयास्ते हि[12] सू(शू)कलाः ॥ ३८ ॥

एवंविधस्वरूपा ये दुष्टचित्ता भवन्ति ते ।
दन्तैः खादन्ति निघ्नन्ति पादैरभ्याशमागतम्[13] ॥ ३९ ॥

पश्चाद्भागेन चोत्प्लुत्य पातयन्ति च सादिनम् ।
पूर्वपादौ समुत्क्षिप्य पतन्ति सह सादिना ॥ ७४० ॥

व[14]ला(ल्गा)मा[15]कृष्य गच्छन्ति सङ्कटेषु विशन्ति च ।
सङ्ग(ङ्घ)माश्रि[16]त्य तिष्ठन्ति न यान्त्यपि च ताडिताः ॥ ४१ ॥

कुलालचक्रवत्तिर्यग्व(ग्भ्र)मन्ति च लुठन्ति च ।
एतैर्दोषैः समायुक्ता ज्ञेयास्ते दुष्टघोटकाः ॥ ४२ ॥

दुष्टानां दम[17]नं वक्ष्ये घोटकानां यथोचितम् ।
उपायैर्विविधैर्यन्त्रैः(न्त्रैः)शिक्षां गृह्णन्ति ते य[18]था ॥ ४३ ॥

---

१ A ह्र । २ A र्घाः । ३ D श्वरंहः । ४ D तम् । ५ A धावन्शरशतं । ६ A पू, यू । ७ D री ।
८ A ड्ढा । ९ A ड्रा । १० A हु । ११ A तः । १२ D स्तुरङ्गमाः । १३ D तान् । १४ D ब ।
१५ D दा । १६ A श्री । १७ A लक्षणं । १८ A त ।

२८

धार्यमाणस्तु यस्तिर्यग् भवत्यश्वः पुनःपुनः।
बाह्यां[1] वल्गां(ल्गां) समाकृष्य मण्डले साधयेत्तु तम् ॥ ४४ ॥

अविलाणं विधार्योर्ध्वं यस्तिष्ठति भयाद्धयः।
निपीड्य सृक्कणी[2](णीं) गाढं स रागा(पादा)भ्यां प्रपीड्यते ॥ ४५ ॥

सम[3]ुच्छलति यो वाजी तस्य वल्गां[4] कृषेद्[5] भृशम्।
पश्चात्स धार्यते गाढं वल्गा[6]कर्षणयोगतः ॥ ४६ ॥

वँल्गा[7]मपाकरोत्यर्थं ति(त)मादौ धारयेद् दृढम्।
पश्चाच्च[8] शिथिलां[9] कर्षकु(न्कु)र्याद्वल्गां[10](ल्गां) विचक्षणः ॥ ४७ ॥

न मन्येत(ता)विलाणं यः कर्कशो वदने हयः।
सूत्रिकां निक्षिपेदास्ये तस्यां वल्गां कृषेच्छ्[11]रशम् ॥ ४८ ॥

अविलाणं गतां वल्गां[12] कर्षेत्सूत्रिकया सह।
तथापि चेन्न मन्येत कृषेन्मस्तकपट्टिकाम् ॥ ४९ ॥

उन्नामयति यः शीर्षं वारं वारं तुरङ्गमः।
वलां[13](ल्गा)माकृष्य तं वाहं पुलया वाहयेत्[14]सुधीः[15] ॥ ७५० ॥

ऊर्ध्वं[16] यो लालिकां धत्ते मोक्षाकर्षणतत्परः।
धारयं[17](यां) तं तुरीयायां तुरङ्गं वाहयेज्जवात् ॥ ५१ ॥

एवं कृते च मुश्चेच्च लालिकां घोटको भयात्।
कविकावर्तिकापार्श्वे कीलकैस्तां प्रकीलयेत् ॥ ५२ ॥

उद्घाटयति यो वक्त्रं घोटको लघुहस्तकः।
तं पुलायां नियुञ्जीत वाजिवाहविशारदः ॥ ५३ ॥

निष्कासयति यो जिह्वां वारं वारं तुरङ्गमः।
लालिकां[18]पार्श्वतस्तस्य कारयेत्तीक्ष्णकण्टकान् ॥ ५४ ॥

योऽधस्तात् कुरुते शीर्षं तस्योरस्त्राणपट्टिकाम्।
विधाय शिथिलामूर्ध्वं[19] वलगये(यो)न्नमयेच्छिरः ॥ ५५ ॥

---

१ D ह्यं। २ D क्कि। ३ A मच्च। ४ A लां। ५ A शे च्छनैः। ६ A ला। ७ D वल्गामपाकरोत्यर्थं यो वाजी, A क्षपां करोति। ८ A चा। ९ A लाकर्षंतु। १० D ल्गं। ११ A शे। १२ A बालां वलां। १३ D वल्गा A वल। १४ D यन्। १५ A धीः। १६ A र्ध्वं, D र्ध्वंपोलायि। १७ D धाल्या तं त्वरायुक्तं वाहयेत्तुरगं जवात्। १८ A कांपा। १९ A र्ध्ववल्गये।

निहन्यादासनं यस्तु पश्चाद्भागं निवेशयेत् ।
स पश्चात्पादतो नेयो नामयेत्तु त्रिकं ततः ॥ ५६ ॥

उत्पतो वा( तेद्वा )ह्यमानो यस्य(यस्तस्य) वक्त्रे विनिक्षिपेत् ।
शिल्लिका(लीकां)केशि(श) निर्माण(ल्यं) न्यसेद्वा कडिया(वा)लिका(कम्)॥५७॥

एणवत्प्लवते यस्तु तं कशादर्शनं विना ।
वल्गां[1] प्रशिथिलां धृत्वा धाराक्रान्त्या पुलापयेत् ॥ ५८ ॥

असोढारोहणो वाजी तस्य ग्रीवां पराङ्मुखीम् ।
कृत्वा वलां[3](ल्गां) दृढां धृत्वा वेगाद्वाह्यः स सादिना ॥ ५९ ॥

सर्पवद्वक्रगामी यस्तस्य पक्षद्वये हयौ ।
संयोज्य वाहयेद्यत्नात्ताडनाँक्रमणोक्तिभिः ॥ ७६० ॥

आरोहन्तं निहन्याद्यः पश्चात्पादेन वाहकः ।
उरः प्रमाणके तोये समारोहेन्निधाय तम् ॥ ६१ ॥

अश्ववारेण यः साँकमारुढेन पतेद्भुवि ।
पर्याणकविहीनं तमन्यमारोप्य वाहयेत् ॥ ६२ ॥

आधाय सादिनं वाजी येन केनापि वर्त्मना[6] ।
निँःसरेत्तत्पथेनैव कशाघातैस्तु तं नयेत् ॥ ६३ ॥

यः पार्श्वर्मुत्क्षिपेद्वाढं गाढोरस्त्राणपीडितम् ।
कृत्वा धृत्वा तथा वँल्गां वाहयेत्तं स्थिरासनम् ॥ ६४ ॥

प्रेरितोऽपि न गच्छेद्यस्तमारुह्य तुरङ्गमम् ।
तिष्ठेच्च सुचिरं कालं यावद्यास्यति कुत्रचित् ॥ ६५ ॥

तथापि चेन्न गच्छेद्यः कशया ताडयेत्तु तम् ।
तथापि चेत्स्थिरस्तिष्ठेद्दुर्दमो वाहनाधमः ॥ ६६ ॥

मोचकस्य प्रकर्तव्यीः[11] पार्ष्ण्यन्ते लोहकण्टकाः ।
तैः कुक्षौ[12] ताडनीयोऽसौ धावनार्थं तुरङ्गमः ॥ ६७ ॥

---

१ A वलां । २ A कृ । ३ D वक्रां । ४ D नात् । ५ A शंङ्का । ६ A वर्त्यंता । ७ A सरे ।
८ A श्वेषु क्षि । ९ A द्रव । १० A वालां । ११ A व्या । १२ D क्ष्यां ।

एवं प्रमृग्यमानोऽपि पदमेकं न चेद्व्रजेत् ।
पश्चात्पादक्रमैर्नेयो भ्राम्यो वा चक्रवद्धयः ॥ ६८ ॥

एवं कृतेऽपि यो वाहः स्थाणुवत्तिष्ठति स्थिरः ।
पिधाय नेत्रे पट्टेन तूर्यादिस्वनमाचरेत् ॥ ६९ ॥

मण्डले वाह्यमानः सन्नन्तर्विशति यो हयः ।
वल्गां[1] बाह्यां समाकृष्य मण्डले तं प्रसारयेत् ॥ ७७० ॥

बहिर्व्रजति यो वाजी मण्डले भ्रमणक्रमे ।
तस्यान्यस्तुरगो योज्यो बहिः पार्श्वेऽश्वसादिना ॥ ७१ ॥

एकया वल्गया[2] यस्तु सम्यक् धावति घोटकः ।
तयैव वल्गया वाह्यो यावन्निर्विण्णतां[3] व्रजेत् ॥ ७२ ॥

प्राप्य[4] यस्तुतिस्तू ....................................... ।
एवं कृते स निर्वेदाद्वल्गां[5]मेनां परित्यजेत् ॥ ७३ ॥

अन्यया वल्गया[6] सम्यक् धृतो धावति घोटकः ।
आश्रयं किमनु[7]प्राप्य यस्तु तिष्ठति सू(शू)कलः[8] ॥ ७४ ॥

अनाश्रये प्रदेशेऽसौ वाहनीयः प्रयत्नतः ।
एवं साध्या प्रयत्नेन[9] सू(शू)कला दुष्टचेतसः ॥ ७५ ॥

ततस्ते राजवाह्यत्वं भजन्ति[10] तुरगोत्तमाः ।
शुभवर्णैः शुभावर्तैः शुभगन्धैः शुभस्वरैः ॥ ७६ ॥

शुभसत्त्वैः शुभाकारै[11]र्युक्ता वाहाः शुभावहाः ।
मुखे पादेषु निर्मांसास्त्रिके वक्षसि विस्तृताः ॥ ७७ ॥

जघने स्कन्धयोः पीना ह्रस्वाः पृष्ठे च कर्णयोः ।
कन्धरामध्ययोर्दीर्घाः श्यावसारङ्गलोचनाः ॥ ७८ ॥

महाजवा महाप्राणा नृपाणामुचिता हयाः ।
एवं रूपगुणोपेतान् शिक्षितान्[12]अश्ववाहकैः ॥ ७९ ॥

---

१ A वलां । २ A धार । ३ A र्तृण । ४ D omits this line । ५ A द्वला । ६ A ल्या । ७ A किसनुक्षि । ८ A सूलकः । ९ A त्नने । १० A व । ११ A भच्छायैः । १२ D तांश्चल ।

तुङ्गस्कन्धोन्नतग्रीवान् लोहं[1]लालाविमोक्षिणः[2] ।
नीचै[3]पाश्चात्यचरणा[4]न् वेणं(ग)वन्मार्गगामिनः ॥ ७८० ॥

मण्डले सर्वधारासु प्रोथसञ्चुम्बितांसकान् ।
वल्गया[5]कृष्य भागे तु क्षिपतस्तत्पदं पुरः ॥ ८१ ॥

प्रे[6]रते(णे)धावतः शीघ्रं ग्रहणे तिष्ठतः सुखम् ।
जयघण्टादि[7]नादेभ्यो बहुवाहखुरारवान्(त्) ॥ ८२ ॥

गजोष्ट्रसन्निधानाच्च त्रासो येषां न जायते ।
तानेवं शिक्षितानश्वानादायात्यन्तमुत्तमान् ॥ ८३ ॥

सज्जीकुर्याच्च पर्याणैर्दन्तिदन्तविनिर्मितैः ।
सौवर्णपट्टभूषाद्यैर्मुक्तामाणिक्यशोभितैः ॥ ८४ ॥

द्वीपिचर्मपिनद्धैश्च पटीपट्टविराजितैः ।
उरोबद्धैः पुच्छबद्धैर्नानावर्णैः सुशोभितैः ॥ ८५ ॥

पादाधारैश्च सौवर्णैर्लम्बिभिः पार्श्वयोर्द्वयोः ।
उष्ट्ररोमकृतैः पट्टैः सौवर्णकटकान्वितैः ॥ ८६ ॥

आकर्षवर्धकैः श्लक्ष्णै[10]र्मध्यभागनिपीडितैः ।
हैमिभिः कं[11]ण्ठिकाभिश्च संलग्नाभिर्मुखे[12] पुनः[13] ॥ ८७ ॥

मस्तकस्थेन पट्टेन वृत्तौ[14]भिर्गण्डवर्धकै[15]ः ।
रौप्यानिर्मितलाली(ला)नां बद्धवल्गा[16]भिरन्तयोः ॥ ८८ ॥

रत्नकाञ्चनयुक्तेन मुक्ताजालै[17]श्चितेन च ।
निबन्धकेन पर्य[18]न्ते व्याघ्रलाङ्ग(ङ्गू)लशोभिना ॥ ८९ ॥

पेश्वाकपुच्छपिच्छैश्च लोहितैर्भ्राजता भृशम् ।
शङ्खजै[19]र्मणिभिर्वृत्तैः कू(क)णत्कनकशृङ्खलैः ॥ ७९० ॥

पं[20]दकैः पादुकाभिश्च हेमकिङ्किणिकान्वितैः ।
ग्रीवासु मण्डितानश्वान् कुङ्कुमेनोपलेपितान् ॥ ९१ ॥

---

१ D हं । २ A क्ष । ३ D त्य । ४ A णा । ५ D णु । ६ A ल, ल्यः । ७ A ण्ण । ८ A च ।
९ D नि । १० A डनैः ११ A कविभिः काश्चित्स । १२ A खैः खलैः । १३ D सुखं । १४ D त्ता ।
१५ D नै । १६ A ला । १७ D लाश्चि । १८ D र्यां । १९ A त्रै । २० A पद ।

छ[1]त्रचामरसंयुक्तान् पुरतः काहलान्वितान् ।
प्रस्थापयेच्च वाह्यालीं स्वयं यायात्ततो नृपः ॥ ९२ ॥

कृतप्रसाधं[2]नो वीरो वाहविद्याविशारदः ।
चित्रपट्टकृतोष्णीषो धृतपीतोर्ध्वं[3]कञ्चुकः ॥ ९३ ॥

पटीपट्टं(ट्टं)सवाँ[4]लश्च(श्व) धारँ[5]यन् धृतकँ[6]श्च(ञ्चु)कः ।
चारुचामीकरमँ[7]यीं शृङ्खलां वक्षसा धरन् ॥ ९४ ॥

स्वर्णताटङ्कपत्राभ्यां भूषितश्रवणद्वयैः[8] ।
अन्यानपि हयारोहान् कृतविद्यान् जितश्रमान् ॥ ९५ ॥

ज्ञाताश्वहृदयान् दक्षान् स्थिरहस्तान् दृढासनान् ।
वी[9]थीमण्डलधारासु सञ्चारचतुरान् वराँ[10]न् ॥ ९६ ॥

पञ्च(सच) वेदिततत्वज्ञानैँ[11]श्वान्त्रोहे(रोहा)न्नरेश्वरः ।
कृतानुरूपशृङ्गारान् विभजेच्च द्विधीँ[12]कृतान् ॥ ९७ ॥

स्वपक्षे स्थापयेदष्टावष्टौ पक्षान्तरे क्षिपेत् ।
अन्तःपुरैः कुमारैश्च सचिवामात्यमन्त्रिभिः ॥ ९८ ॥

अन्यैर्बहुविधैः पात्रै राजयोग्यैः समन्वितः ।
सुखासनं समारुह्य वाजिनं प्रियया सह ॥ ९९ ॥

ततः प्रविश्य वाह्यालीं सहयातान् प्रवेश्य च ।
मण्डपे पूर्वसङ्क्लृप्ते यथास्थानं निवेशयेत् ॥ ८०० ॥

ततः स्वयं समारोहेद्दिव्यं काम्बोजवाजिनम् ।
धन्वा(न्व)न्तरैँ[13]त्रयादन्तैँ[14]र्द्वारयोस्तोरणद्वयम् ॥ १ ॥

तोरणस्तम्भयोर्मध्यं चतुर्धन्वा(न्व)न्तरायतम् ।
कुर्यात् कन्दुकनिष्कासान् ज्ञातुं जयपराजयौ ॥ २ ॥

यैश्च कन्दुकनिष्कासः कृतस्तेषां जयो भवेत् ।
वक्रकुण्डलिताग्राः स्युर्वेत्रजा दृढबन्धनाः ॥ ३ ॥

१ A च । २ AD द । ३ D तार्ध । ४ A वल्गा । ५ A विभीतं । ६ A व । ७ D वर्ती ।
८ A ये, यम् । ९ D विद्या । १० A हयान् । ११ A न् नत्वाऽरो । १२ A विधा । १३ D त । १४ D द्वी ।

शो[1]णेन चर्मणा नद्धा मुखे कृष्णेन गुं[2]ण्ठिताः ।
पञ्चाङ्गुलपरीणाहा गेद्दि[3]काश्चा[4]र्द्धु(प)मात्रिकाः[5] ॥ ४ ॥

शोभिना हेमपट्टेन क्वचिद्रत्नविभूषिताः ।
प्रगृह्य गेद्दि[6]काः सर्वे पक्षद्वितयसादिनः ॥ ५ ॥

आरोहेयुर्वरान् वाहान् स्वतोरणसमीपगाः ।
सुवृत्तं कन्दुकं क्लृप्तं पारिभद्रकदारुणाँ[7] ॥ ६ ॥

चर्मणा वेष्टितं भव्यं लोहितं दृष्टिरञ्जनम् ।
दुवाल्या प्रेरयन्नश्वं गेद्दि[8]काग्रेण भूतले ॥ ७ ॥

कन्दुकं चालयेदेकः परतोरणसम्मुखम् ।
तत्पक्षाश्चानुगच्छेयुः प्रतिपक्षाश्च[9]सम्मुखम् ॥ ८ ॥

आगच्छेत्तं ततस्त्वेकः कन्दुकं ताडयन् बलात् ।
जवयुक्तेन वाहेन प्रतीपं कन्दुकं नयेत् ॥ ९ ॥

प्रतिपक्षस्तथैवान्यः कन्दुकं परिवर्तयेत् ।
एवमन्योन्यसङ्घर्षा[10]द्घा[11]तायातैश्च कन्दुकम् ॥ ८१० ॥

क्रीडन्तः प्रेरयेयुस्ते बहुघा[12]तैरनेकशः ।
पुरोघातेन तेष्वेकः पश्चाद्घातेन चापरः ॥ ११ ॥

तिर्यग्घात(तै)स्तथा चान्यो बहिर्घात(तै)स्तथेतरः ।
गोडि(द्दि)काग्रेण सङ्गृह्य नयेतान्यो विहायसा ॥ १२ ॥

गगनस्थं परः सादी[13] ग्रेडि(द्दि)काग्रेण धारयेत् ।
अपरश्चों[14]श्ववारोऽपि तं[15]मादायाम्बरान्नयेत् ॥ १३ ॥

एवं सङ्कुलघातेन कन्दुकं भुवि चाम्बरे ।
नयन्तस्तोरणस्यान्तर्बहिर्निष्कास्य कन्दुकम् ॥ १४ ॥

जयं लभन्ते तत्पक्षास्तूर्यनादावि[16]जृम्भितम् ।
विनोद्य कन्दुकेनैवं जयमासाद्य भूपतिः ॥ १५ ॥

१ A शौ । २ A गण्ठिता । ३ D डि । ४ D ट्ठुम । ५ A का । ६ D डि । ७ D ण्म् । ८ D डि
९ A श्च । १० D युः । ११ D घा । १२ A धायै । १३ A दि । १४ D श्च तथा सादी । १५ D आपातं
गगनं नयेत् । १६ D ल ।

तस्मादवतरेदश्वात्स्तूयमानश्च वन्दिभिः ।
तोकारदेशसम्भूतं सर्वलक्षणसंयुतम् ॥ १६ ॥

शिक्षितं जवसम्पन्नमारोहेत्तुरगोत्तमम् ।
ततो मण्डलवारीषु(धारासु) धारयेत्तं[1]त्तु(न्तु)रङ्गमम् ॥ १७ ॥

अन्तर्वल्गां[2] समाकृष्य बहिर्वल्गां[3](ल्गा)कृताश्रयः ।
दृढो[4]रु(रु)श्चलजङ्घश्च स्थिरहस्तोऽश्लथासनः ॥ १८ ॥

विस्तृतोरस्थलश्चैव बाह्यकर्णा[5]ग्रदन्तदृक् ॥
अङ्गुष्ठाग्रेण सम्पीड्य पादाधारयुगं दृढम् ॥ १९ ॥

परतो मध्यपादे[6]न पार्ष्णि[7]भ्यां ताडयेद्धयम् ।
विगत्या परिगच्छन्तं कशाघातेन ताडयेत् ॥ ८२० ॥

वाग्भिः सन्तर्जयेदश्वमूरुभ्यां परिपीडयेत् ।
धा[8]रासु वर्धयेद्भावं क्रमेण च विवर्त्त(र्त)येत् ॥ २१ ॥

कुपितं सान्त्वयेदेनं स्कन्धास्फालनमाचरेत् ।
सव्यापसव्यचारीषु तां[10] तां वल्गां[11] समाकृशेत् ॥ २२ ॥

वीथ्यामुत्प्लवने धार्यं सम्यग् वल्गा[12]द्वयं समम् ।
एवं वाहनविद्यायामुत्कर्षं दर्शयेन्नृपः ॥ २३ ॥

रञ्जयन् प्रेक्षकाँल्लोकानश्वविद्याविशारदान् ।
[13]अन्तःपुरपुरन्ध्रीभिः कृतनीराजनाविधिः ॥ २४ ॥

स्वर्णवस्त्रैरलङ्कारैस्तोषयेदश्ववाहकान् ।
स्तूयमानो जनैः सर्वैर्गीयमानश्च गायकैः ॥ २५ ॥

कविभिः पठ्य[14]मानस्तु प्रविशेद्राजमन्दिरम् ।
एवं तुरगवाह्यालीविनोदः कथितो मुदा ॥ २६ ॥

भूलोकमल्लदेवेन जगदानन्ददायिना ।
विनोदो वाजिवा[15]ह्यालीसङ्गतः प्रतिपादितः ॥ २७ ॥

इति तुरगवाह्यालीविनोदः ॥ ४ ॥

१ D त्तु । २ A लां, ल्ला । ३ D ल्ग । ४ A ढ । ५ A र्णेऽग्र । ६ A पद्केन । ७ A र्णि । ८ D सुधासु । ९ A न्धस्याला । १० D लम्बां वल्गां । ११ A वलां । १२ A ला । १३ A ततः । १४ A पा । १५ D ह ।

अधुनाङ्कविनोदोऽयं वर्ण्यते सोमभूभुजा ।
के(ये)न वा युध्यते[1] सार्धमेकः खलकधामनि[2] ॥ २८ ॥

समेनास्त्रेण यस्तज्ज्ञैरङ्कः[3] स परिकीर्तितः ।
अङ्कश्च त्रिविधाः प्रोक्तास्तेषां वक्ष्यामि लक्षणम् ॥ २९ ॥

अभिधानं नाम तेषां कारणैश्च पृथक् पृथक् ।
गालिभिस्ताडनैर्मूर्धहननैर्दलबन्धनैः ॥ ८३० ॥

आस्यैतांबूलघातैश्च केशानां छेदनैरपि ।
एतैरन्यैश्च विविधैः कारणैर्योऽभिभूयते ॥ ३१ ॥

परिभूताङ्क इत्येष विश्रुतो जनसंसदि ।
एकवेश्यानिमित्तेन कामक्रोधविमोहितः ॥ ३२ ॥

ईर्ष्यया युध्यते यस्तु मत्सराङ्कः स उच्यते ।
गृहक्षेत्रादिहरणात् सीमाव्याजाच्च युध्यते ॥ ३३ ॥

देशलाभनिमित्ताच्च भूम्यङ्को नामतो हि सः ।
एकमुद्दिश्य सर्वान्वा विरुदं पाठयेत्तु यः ॥ ३४ ॥

गाययेद्वाँदयेद्वाऽपि काहलां वा मदोद्धतः ।
आरुह्य महिषं दर्प(र्पाद्) दिवा दीपं प्रदीपयेत् ॥ ३५ ॥

तृणानि विकिरन् वीथ्यां विरुदाङ्को निगद्यते ।
शस्त्रविद्यावलेपेन युद्धवृत्या विजीविषुः ॥ ३६ ॥

युध्यते यस्तु स ज्ञेयो विद्याङ्को नाम नामतः ।
पित्रादिमारणोद्भूतं वैरं संस्मृत्य युध्यते ॥ ३७ ॥

वैराङ्क इति नामास्य कृतवान् सोमभूपतिः ।
कृतापराधकं राजा योधयेन्निग्रहाय यम् ॥ ३८ ॥

तादृशेन द्वितीयेन द्रोहाङ्कः सोऽभिधीयते ।
कृत्वा पापानि यो मोहाद्विरक्तोऽभ्येत्य भूपतिः(तिम्) ॥ ३९ ॥

१ A मुच्य। २ A गामनी, धामति। ३ A ङ्कसाः। ४ A स्येता। ५ D र्वेत्वाद्। ६ D ट। ७ A द्वाद। ८ D द्दा। ९ A यन। १० A तम्।

युध्येताद्य(घ)निवृत्यर्थं प्रायश्चित्ताङ्ग उच्यते ।
एवं विवादसम्पन्नान् वारयेद्युद्धकर्मणः ॥ ८४० ॥

अशक्यत्वात्ततो पश्चाद्योधयेद्धार्मिको नृपः ।
ईदृशांष्टविधानङ्गान्योधयन् पृथिवीपतिः ॥ ४१ ॥

पापं नाप्नोति तेषां च व्याजपापं व्यपोहति ।
कारयेत्खलकं राजा तुङ्गं वृत्तं समं दृढम् ॥ ४२ ॥

द्व्यष्टहस्तसुविस्तीर्णं त्रिगुणं परिणाहतः ।
द्वात्रिंशन्मेढकैर्युक्तं द्वारेणैकेन संयुतम् ॥ ४३ ॥

निम्बपत्रैः पताकाभिर्मेढकाग्राणि भूषयेत् ।
द्वारं सोपानसंयुक्तं कुर्यात्तोरणमण्डितम् ॥ ४४ ॥

अधिष्ठितं दण्डधरैः खलकं लक्षणान्वितम् ।
खलकेन समोत्सेधे कुर्याद्वीक्षणमण्डपम् ॥ ४५ ॥

विशालं चतुरस्रं च सवितानं च साङ्गणम् ।
मध्ये वेदिकया युक्तं चित्रभित्तिसमन्वितम् ॥ ४६ ॥

सुधाधवलितं रम्यं श्लक्ष्णकुट्टिमशोभितम् ।
स्वर्णपट्टपिनद्धैश्च स्तम्भैः सुपरिमण्डितम् ॥ ४७ ॥

वारे शनैश्चरे सोऽयमङ्गानाहूय योधयेत् ।
प्रतिज्ञां शृणुयात्तेषां[11] विविधां[12] शौर्यशालिनीम् ॥ ४८ ॥

प्रधावाम्यहमित्येको रुणध्मीति तथापरः ।
खे[13]ऽश्वामीति तथा चैको धारयामीति चापरः ॥ ४९ ॥

अपसर्पामि[14] नेत्येकः च(श्च)सर्पामीति कश्चन ।
मारयाम्यहमित्येको म्रियेऽहं नेति चापरः ॥ ८५० ॥

शस्त्र्याः शस्त्रिकया स्पर्शे हनिष्यामीति कश्चन ।
[15]अस्त्रशस्त्रैः तवाङ्गानि दारयामीति चेतरः ॥ ५१ ॥

१ A द्ध। २ A व। ३ D शो। ४ A न प्रा। ५ D द्वि। ६ A न्मण्ड। ७ D धा। ८ D दी। ९ A नी। १० D वाद। ११ A त्के। १२ A धा। १३ A खा। १४ D मीतिनैक चसर्पामीतिकश्चन। A अपसर्पामिनेत्येकः सर्पप्रामीतिः चापरः। १५ A अस्त्रशास्त्रीं, आस्त्रां।

छिनद्मि पादं धावन्तं घ्नन्तं[1] हस्तं निहन्म्यहम् ।
दण्डं[2] छिनद्मि निक्षिप्तं[3] गात्रं विद्या(ध्या)म्युपागतम् ॥ ५२ ॥

ब्रुवतामेवमन्योन्यं प्रतिज्ञां लेखयेन्नृपः ।
तेषां भूषाविशेषांश्च दत्वा कुर्याद्विसर्जनम् ॥ ५३ ॥

ततः प्रभाकरे वारे कृतपूर्वाह्णिकक्रियैः[4] ।
निवर्त्य भोजनं राजा भवेत्सम्भृतमण्डनः ॥ ५४ ॥

यामावशेषे दिवसे शुद्धान्तवनितायुतः ।
प्रसादचित्तैर्भृत्यैश्च पुरैर्म(रम)ण्डलपालकैः ॥ ५५ ॥

परमण्डलभूपालैः सचिवामात्यमन्त्रिभिः ।
प्रविश्य वीक्षणाङ्गा[5](गा)रमधितिष्ठेन्नृपासनम् ॥ ५६ ॥

ततः समागतान् सर्वान्यथायोग्यं निवेशयेत् ।
अङ्कास्ततः समायान्ति समारुह्य करेणुकाः ॥ ५७ ॥

मुदितास्तूर्यघोषेण कुर्वन्तः सिंहगर्जितम् ।
काहलां वादयन्तश्च बिरुदाक्षरवादिनीम् ॥ ५८ ॥

हरिताङ्गरागकाः केचित्केचित्पीताङ्गरागिणः ।
कृष्णाङ्गरागिणः केचित्केचिच्छ्वेताङ्गरागिणः ॥ ५९ ॥

त्रिबि[6]न्दुं(न्दु) विन्दुमाला च (लश्च)त्रिशूलं मण्डलाकृतिः[7](ति) ।
पुत्रिकाकारमर्धेन्दुसदृशं तिलकं भवेत् ॥ ८६० ॥

तिलकं भालदेशे तु नेत्रस्याधः कटस्थले ।
बाह्वोश्च शिखरे वर्तंसे दधाना जठरेऽपि च ॥ ६१ ॥

पञ्चवर्णकपट्टांश्च वसाना जानुलम्बिनः ।
सौवर्णं दधतो रम्यं पट्टिकावेष्टितं दलम् ॥ ६२ ॥

शङ्खजैर्मणिभिः स्थूलैः कृतकण्ठविभूषणाः ।
पीतलोहितपट्टैश्च शोभिताश्चावलम्बने[10] ॥ ६३ ॥

१ D घ्नतं । २ A ण्ड । ३ A नाक्षिप्रं । ४ A याः । ५ A वीस D वीक्षणाङ्गारं । ६ A विंदं । ७ D ति । ८ D शिरसे । ९ D वृत्वा A धृत्वा । १० D म्बिनः ।

प्रविश्य खलकं सर्वे कृतकूर्मासनक्रियाः ।
प्रणमन्तो महीपालं विज्ञपेयुः पृथक् पृथक् ॥ ६४ ॥

क्षितीशः परिभूतेन योधयेत्परिभावकम्[1] ।
स्त्रीमत्सरसमायुक्तं मत्सरेणैव योधयेत् ॥ ६५ ॥

सविरोधौ क्षितेर्[2]त्यर्थे योधनीयो[3](यौ) परस्परम् ।
विरुद्धं योधयेद्राजा विरुद्धप्रतिरोधिना ॥ ६६ ॥

विद्याङ्क(ङ्कः) समविद्येन तद्विधेनैव योधयेत् ।
वैराङ्क[4](ङ्कौ) वैरिणा सार्धं योधनीयो महीभुजा ॥ ६७ ॥

द्रोहाङ्कं तादृशेनैव वध्येन सह योधयेत् ।
पापिनां (नं) पापशुध्यर्थं पापिना सह योधयेत् ॥ ६८ ॥

दण्डधारयु(धृ)तं दण्डमङ्क[5]योर्मध्यवर्तिनम् ।
अपनीय[6] ततो मुञ्चेद् द्वावङ्कौ युद्धलालसौ ॥ ६९ ॥

निवारयन्तौ खोञ्चन्तौ धावन्तावपसर्पिणौ ।
क्रोधरक्तेक्षणौ वीरौ सन्दष्टो(ष्टौ)ष्टपुटावपि ॥ ८७० ॥

मुञ्च मुञ्चेति जल्पन्तौ खोञ्च खोञ्चेति भाषिणौ ।
स्खलद्गतियुतौ वीरौ क्षिपन्तौ[7] पुरतः सह ॥ ७१ ॥

रुधिरोक्षितसर्वाङ्गौ लम्बमानान्त्रमालिकौ ।
क्षुरिकायां विभिन्नायां पतितायां करादपि ॥ ७२ ॥

विच्छिन्नशस्त्रबाहौ च चरणे परिखण्डिते ।
निवारणार्थं युद्धस्य दण्डं मध्ये निवेशयेत् ॥ ७३ ॥

अपक्षगामी नृपतिर्धर्मयुद्धं प्रवर्तयेत् ।
निहन्तॄ[9]णां जयो युद्धे दैवेनैव प्रवर्तते ॥ ७४ ॥

प्रतिज्ञापालकानां तु जयं दद्यान्नृपः स्वयम् ।
प्रसाददानकं भूरि वस्त्रकाञ्चनभूषणम् ॥ ७५ ॥

---

१ D कः । २ A ते त्य । ३ D यः । ४ D ङ्कं । ५ D ङ्कं यै । ६ D यं । ७ D तौ । ८ A च ।
९ A द्धे । १० A हतॄणां ।

ग्रामानश्वांस्तथा निष्कान्[1] वृत्तिं दत्वा तु जीवितम्।
मृतानां बन्धुरक्षार्थं परलोकक्रियाकृते ॥ ७६ ॥

कृपादानं प्रदातव्यं काञ्चनं भूरि भूभुजा।
एवमुक्तविनोदेन दिनशेषं समाप्य च ॥ ७७ ॥

विसर्ज्य च जनान् सर्वान्प्रविशेद्राजमन्दिरम्।
एवमङ्कविनोदोऽयं कथितो सोम[2]भूभुजाः ॥ ७८ ॥

इत्यङ्कविनोदः ॥ ९ ॥

अथ मल्लविनोदोऽपि कथ्यते राजवल्लभः।
मल्लास्तु त्रिविधा ज्ञेया उत्तमो मध्यमोऽधमः ॥ ७९ ॥

उत्तमो ज्यै[3](ज्ये)ष्ठिको नाम मध्यमोऽन्तर[4]ज्येष्ठिकः।
कनिष्ठो गोवलो ज्ञेयः कार्य[5]प्राणगुणोत्तरात् ॥ ८० ॥

आविंशतेर्वत्सरेभ्यो भविष्णुर्मल्ल उच्यते।
तत ऊर्ध्वं त्रिंशदब्दात्प्ररूढः परिकीर्तितः ॥ ८१ ॥

ततः परं हीयमानो नियुद्धे त्वक्षमो भवेत्।
महाकायो महाप्राणो मल्लविद्याविशारदः ॥ ८२ ॥

ज्येष्ठिकः कथ्यते मल्लः प्राणविद्याधिकोऽपि वा।
अर्धेन ज्येष्ठिमल्लस्य कायप्राणगुणै[6]स्तु यः ८३ ॥

हीयमानो भवेन्मल्लो नाम्ना सोऽन्तर[7]ज्येष्ठिकः।
ततोऽपि हीयमानश्चेदेतैरेव गुणैस्तथा ॥ ८४ ॥

गोवलो नाम मल्लोऽसौ नियुद्धे वेगवान् वरः।
वे[8]गल्लः सरलो दीर्घो भविष्णुः शैशवे भवेत् ॥ ८५ ॥

जङ्घाकाण्डे कोष्ठके च हनुदेशेऽस्थिसारवान्।
द्वात्रिंशतां[9] वत्सराणां पाल्यंशो[10](शे) देशवि[11]श्रृ(श्रु)तः ॥ ८६ ॥

पूर्णासु तासु पालीषु वर्तयिष्ये नियोधनम्।
एवं समादिशन्मल्लान् सर्वान् क्षोणिपतिः स्वयम् ॥ ८७ ॥

१ A पत्नीं। २ A वीरनन्दनः। ३ D जे। ४ D जे। ५ A यः। ६ A णोऽ। ७ D जै। ८ D वैग। ९ D तां। १० A षोडश। ११ A स्तृताः।

पोषार्थं द्रविणं तेभ्यो दत्वा पश्चाद्विसर्प(र्ज)येत ।
भविष्णवः प्ररूढाश्चै[2] पोष्या[3] बृंहण[4]भोजनैः ॥ ८८ ॥

माषैर्मांसैस्तथा दध्ना पिष्टैः क्षीरविमिश्रितैः ।
घृतेन सितया चैव विदार्या वाजिगन्धया ॥ ८९ ॥

घृतेन भृष्टैः कुष्माण्डैश्चूर्णितैः सितयान्वितैः ।
योषितां दर्शनात्स्पर्शात्संल्ला(ला)पात्सङ्गमादपि ॥ ८९० ॥

संरक्ष्यां यत्नतो मल्ला विशेषेण भविष्णवः ।
एकान्तरे दिने कुर्युः श्रममश्रमहेतवे ॥ ९१ ॥

पृथक् पृथक् स्वगेहेषु निजैर्गोवलकैः सह ।
गोवँलैः सह कुर्वीत नियुद्धं प्राणवर्धनम् ॥ ९२ ॥

संस्थानानि च चत्वारि कल्पयेयुर्दृढानि च ।
विज्ञानानि च सर्वाणि तेभ्यसेर्युरशेषतः ॥ ९३ ॥

वक्ष्यामि स्थानकानाञ्च विज्ञानानां च लक्षणम् ।
कक्षे पूर्वापरे धृत्वा प्रोत्तानपतितस्य हि ॥ ९४ ॥

तत्कपोलं स्वपार्श्वेन सम्पीड्यार्धाङ्गकं भवेत् ।
पुरः कक्षं[11] समादाय पूर्ववत्[12]पातितः स हि ॥ ९५ ॥

मूर्ध्नि कूर्मासनं बध्वा भजेद्वाप्येकपादके(कम्) ।
उत्तानप्रतिमल्लस्य निवार्य चरणद्वयम् ॥ ९६ ॥

उदरस्योपरिस्थाँ[13]नं स्थानं[14] करवँलं[15] स्मृतम् ।
स्वयमुत्तानपतितो जठरागमनोद्यतम् ॥ ९७ ॥

पादाभ्यां पीडयन् मध्ये जठरस्थानकं भवेत् ।
पराङ्मुखस्य मल्लस्य स्थितस्य पतितस्य वा ॥ ९८ ॥

कक्षा[16]मांक्रम्य पार्श्वाभ्यां पृष्ठस्थानकमाचरेत् ।
उक्तानि स्थानकान्येवं विज्ञानानि प्रचक्ष्महे ॥ ९९ ॥

१ D पौषा । २ A श्च । ३ प्रे । ४ A बृ । ५A क्षयेत्त । ६A मल्लान्वि । ७ A वा । ८ A श्चेतु । ९ A ल । १० A जेत् । ११ A ढां । १२ D पा । १३ A नंतंस्था । १४ A न । १५ A खलं, A खं । १६ A च्छा ।

स्वरूपेण तथा नाम्ना विस्तरेण यथागमम् ।
अर्धाङ्गस्थानकच्छे[1](स्थे)न मल्लेन स्थूलवर्ष्मणा ॥ ९०० ॥

पीडनान्मुखदेशस्य विज्ञानं स्यात्तदेव तु ।
स्थि[2]त्वै[3]वार्धाङ्कके स्थाने पादस्याकर्षणं बहिः ॥ १ ॥

बहिः पणमितिज्ञेयं विज्ञानं[4] पादमोटनम् ।
शिरःस्थानकमास्थाय गृहीत्वैकेन मूर्धकम् ॥ २ ॥

अन्येन तत्करस्याधः क्षिप्तेन स्वकरे धृते ।
बहिर्भागे च वलिते विज्ञानं बाहुमोटनम् ॥ ३ ॥

तस्यैव परिद(ह)त्तस्य मोटने बाँहुसीं[6] भवेत् ।
जङ्घाभ्यां च भुजाक्रान्तौ ताभ्यां शिरसि पीडिते ॥ ४ ॥

पुरः कक्षां[7] समाकृष्य गुणालं प्राणघातकः (कम्) ।
ग्रीवायाः सभुजायाश्च पादेनाक्रमणे सति ॥ ५ ॥

अन्यं[10]जान्वे[11]वबद्धेन कुर्यादुत्तरढोङ्करं[12]म् ।
शिरःस्थितेन मल्लेन विक्षेपायोद्यतं पदम् ॥ ६ ॥

गृहीत्वा सक्थियुग्मेन कक्षे निक्षिप्य पार्ष्णिकम्[13] ।
उत्तानजानुदेशस्य कटियन्त्रेण पीडनम् ॥ ७ ॥

पट्टिशं[14] नाम विज्ञानं जानुसन्धिप्रभञ्जनम् ।
अनेनैव प्रकारेण बाहुसन्धिप्रपीडनम् ॥ ८ ॥

छुंडुकी[15] नाम विज्ञानं प्राह सोमेशभूपतिः ।
अधो विधा[16]य तद्बाहोः पूर्ववत्[17]पीडनं यदि ॥ ९ ॥

विज्ञानमन्तर्[18]छुंडुकी बाहुसन्धिप्रभञ्जनी[19] ।
मन्यां[20] कक्षे विनिक्षिप्य भुजेनैकेन संयुताम् ॥ ९१० ॥

गलं प्रकोष्ठेनापीड्य तत्करेण करान्तरम् ।
सन्धौ प्रगृह्य जठरं सक्थिभ्यां परिपीडयेत् ॥ ११ ॥

---

१ D क्षे । २ A छिन्नौ चार्धाङ्गिकौ । ३ A व । ४ A न । ५ D च । ६ D चाडु A चापु ।
७ A च्छा । ८ A ध्यौ, ण्णौ । ९ A न्व । १० D न्यद् ज्ञात्वा च वाहेन । ११ A त्व । १२ A रा ।
१३ A काम् । १४ A दि । १५ D छण्डु A छड । १६ A धो । १७ A त्य । A १८ D न्तो बुडकी ।
१९ D नीः । २० A क ? ।

ततस्तद्[1] ढोङ्करं[2] नाम विज्ञानं जीवघातनम् ।
अर्धाङ्गस्थानके स्थित्वा बाहुभ्यां मध्यमु[3]न्नयन्[4] ॥ १२ ॥

पार्श्वेन पीडयन् कण्ठं कक्षामूरुं स्वजङ्घया ।
तुर्यष्टिरिति विज्ञेयं विज्ञानं मध्यभञ्जनम् ॥ १३ ॥

[5]शिरस्थानकविज्ञानान्यमूनेकादशैव तु ।
स्थाने करव[6]ले स्थित्वा वक्रे क्षिप्त्वा निजोदरम् ॥ १४ ॥

पा[7]दमुर्द[8]वडं नाम्ना विज्ञानं श्वासरोधनम् ।
उरसा पीडनं तद्वद्विज्ञानं मुखपट्टकम्[9] ॥ १५ ॥

हस्तद्वयेन वक्रस्य पिधानं मुस्ति[10]कान्वयम् ।
स्थित्वा करव[11]ले स्थाने मणिवन्धस्य मोटनम् ॥ १६ ॥

क्रियते यत्र तत्प्रोक्तं कुट्टा[12]नं करभञ्जनम् ।
[13]बाहुभ्यां मध्यमाक्रम्य जङ्घामाक्रम्य जङ्घया ॥ १७ ॥

जानुसन्धिविभागार्थं भजेच्चरणपट्टिशम् ।
परस्य जानुसन्धौ तु करं निक्षिप्य कश्चन[14] ॥ १८ ॥

जङ्घाभ्या[15]मूरुमाक्रम्य विदध्याल्लोलपादकम् ।
जठरस्थानके स्थित्वा बाहोर्य[16]त्र निपीडनम् ॥ १९ ॥

[17]सन्दशाकृतिबाहुभ्यां सन्दंशं नाम तद्भवेत् ।
जङ्घां विधाय मन्यायां जानुसन्धिनि[18]पीडिता[19] ॥ १२० ॥

चूडां[20] वा पूर्वकच्छां[21](क्षां)वा कर्ष(र्षन) ढोङ्का[22]रमाचरेत् ।
ऊरुभ्यां मध्यमाक्रम्य पादौ निक्षिप्य कक्षे[23]योः ॥ २१ ॥

आविध्य बाहुना जङ्घे[24] कुर्याज्जवलशङ्ख[25]कम् ।
साम्याज्जवलशङ्खस्य पादस्यैकस्य पीडनात् ॥ २२ ॥

१ A स्वस्त, स्तत्त । २ A ठाङ्करक । ३ A मज्जनं । ४ A त् । ५ D adds these two lines।
६ A व । ७ A पों । ८ D द्दव, द्धव । ९ D कः । १० D सि । ११ A व । १२ D टयकं A दार्क ।
१३ A म । १४ D नः । १५ A भ्यामरु । १६ A न्त्र । १७ A सद्द । १८ D प्रपीडिताम् । १९ A ता ।
२० D डा । २१ D वत्कच्छा । २२ A का । २३ D पाद । २४ A जङ्घैः । २५ D वेन ।

उक्तं कक्षवडं[1] नाम विज्ञानं पादभञ्जनम् ।
सर्वाङ्गं पीडयेद्यत्र मध्यमाक्रम्य तिष्ठतः ॥ २३ ॥

सुमुखी नाम विज्ञानं सङ्कोचादङ्गसाधनम् ।
ऊरुभ्यां मध्यमाक्रम्य मन्यां कक्षान्तरे क्षिपेत् ॥ २४ ॥

ज्ञेयं गूढं[2] गु[3]( ढाङ्गु )लिर्नाम विज्ञानं कण्ठमोटनम् ।
पृष्ठस्थात( न )क्रमास्थाय बाहू कक्षान्तनिर्गतौ ॥ २५ ॥

मन्यायां सङ्गतौ कृत्वा करशाखानिबन्धनौ ।
ताभ्यां सम्पीडयेन्मन्यां कुर्वश्चाधोमुखं शिरः ॥ २६ ॥

ऊरुभ्यां मध्यमापीडय युज्यां[10]द्गरु[11]डपक्षकम् ।
पृष्ठस्थैः[12] प्रतिमल्लस्य पृष्ठपृष्ठे[13] भुजं बलात् ॥ २७ ॥

आ[14]कृष्य वर्त[15]यन्कुर्याद्विज्ञानं वेसणा[16]बिंदु( घ्नं वु )धः ।
जानुसन्धौ क्षिपेज्जङ्घां पतितः[17] स्यादवाङ्मुखम् ॥ २८ ॥

उरसा पीडयेत्पादं तदङ्ग[18]वलनं भवेत् ।
मन्यां कक्षान्तरे कुर्याद्बाहुं गरुडपक्षवत् ॥ २९ ॥

मध्यपीडनयोगेन भवेत्[19]सं[20]दुपवेदनम् ।
एकद्वित्र्यङ्गु[21]लीं मुक्त्वा[22] करशाखाचतुष्टयम् ॥ ९३० ॥

भज्यतेऽङ्गुष्ठवर्ज्यं तद्विज्ञानं चतुरङ्गुलम् ।
बाहुना बाहुमाविध्य धृत्वा चान्येन मुद्ध[23]कम् ॥ ३१ ॥

मो[24]ट्यते तु शिरो[25]स्तियग्विज्ञानं तद्वधा(दा)भिधम्
हस्तौ पादौ च शीर्षं च पद्भ्यामावेष्ट्य[26] पीडनात् ॥ ३२ ॥

विज्ञानं तत्समाख्यातं डोक्क[27]रं सकुटुम्बकम् ।
विज्ञानान्येवमुक्तानि बन्ध[28]मोटनकारणम् ॥ ३३ ॥

१ A टं । २ A गुधि । ३ D मु । ४ D ड । ५ H यक्र । ६ D हु । ७ D रोक्षिपेत । ८ D
याः । ९ D न्मूर्धा । १० D ञ्ज्या । ११ A रुरड । १२ A स्था । १३ D ष्ठं । १४ A स्वा ।
१५ A र्तयः, र्धय । १६ A णेबु D नेबु । १७ D तस्यह्य । १८ D ल्व । १९ A न्म । २० A वै ।
२१ A ली । २२ A क्ता । २३ A द्ध । २४ A माद्य । २५ A रोति । २६ A द्य । २७ A क्रु ।
२८ A वधमोड ।

वक्ष्यामि वञ्चनोपायान्विधिवच्छास्त्रदृष्टितः।
छुंडुक्यां[1] तु प्रयुक्तायां भ्रमित्वा तां निषेधयेत् ॥ ३४ ॥

मुखस्योपरिजङ्घां[2] वा निक्षिप्य विनिवारयेत्।
पट्टिशेन गृहीताङ्घ्रिस्त्रिवृत्त्यापनयेन्नतम्[3] ॥ ३५ ॥

बाहुमोटनविज्ञानं हस्तौ संयोज्य वारयेत्।
शिरस्थानगतं मल्लं बाहुभ्यामुत्क्षिपेद्बलात्[4] ॥ ३६ ॥

पादाभ्यामवकर्षेद्वा[5] देहं वा वर्तयेदवाक्।
स्थितं करवले[6] स्थाने जयेच्छत्रुः प्रतिमल्लकम् ॥ ३७ ॥

पश्चात्कक्षान्तरं (र) न्यस्तपादाङ्गुष्ठेन[7] कर्षयेत्।
अशक्य(क्त)श्चे[8]त्तथा ऋष्टमूरुभ्यां तस्य सक्थिकम् ॥ ३८ ॥

निपीड्य धारयेन्मल्लं[9] यया( था )नान्यक्षमो भवेत्।
जठरस्थानसंलग्नं[10] ( ग्नां ) पुरः कृच्छ्रां[11] विधार्य च ॥ ३९ ॥

कूर्पराभ्यां निपीड्योरूं[12] अवसृत्य विमोचयेत्।
तथा मोचयमानस्य जङ्घे धृत्वा निजाङ्घ्रिणा ॥ १४० ॥

नाभिदेशे विनुद्याथ पातयेद्धरणीतले।
पात्यमानस्तथा मल्लः पादं पश्चात्प्रसार्य[13] च ॥ ४१ ॥

तिष्ठेत्स्थैर्यमथालम्ब्य यथा न पतति क्षितौ।
पालीदिने नियुद्धाख्यः श्रम एवं[14] निवेदितः ॥ ४२ ॥

स च प्रभाते कर्तव्यो[15] विज्ञायो (नो) पायसिद्धितः।
उ(स)पालीदिवसे प्रातर्वालुकाभृतगोणिकाः ॥ ४३ ॥

बाहुभ्यामुत्क्षिपेच्छक्त्या पादाभ्यां च मुहुर्मुहुः।
भारं सोढुं स कर्तव्यो[16] ज्येष्ठैर्मल्लैर्विशेषतः ॥ ४४ ॥

भारश्रमोऽयमाख्यातो गात्रप्राणविवर्धनः।
भ्रमणार्थं ततो गच्छेत्क्रोशमेकं बहिः पुरात् ॥ ४५ ॥

---

१ A छुडक्या ज्ञानभोगेन यामित्वा। २ A ङ्घा। ३ D यान्वि। ४ A द्ग। ५ D व। ६ A यस्थं। ७ A ह। ८ A श्च। ९ A यन्म। १० A ङ्ग। ११ D क्षां। १२ D रुं। १३ A सर्पयेत्। १४ A व। १५ D व्योविज्ञायो। १६ A व्या।

निवर्तेत तथा तूर्णं श्रमोऽयं भ्रमणाभिधः ।
पुष्करिण्यां तडागे वा नद्यां च प्रविशेज्जलम् ॥ ४६ ॥

कण्ठदघ्नं ततस्तोयं बाहुभ्यामवलोडयेत् ।
जङ्घाबलावहः पूर्वः कथितो भ्रमणश्रमः ॥ ४७ ॥

बाहुप्राणकरो ज्ञेयो द्वितीयः सलिलः(ल)श्रमः ।
स्थितौ तुदेतामन्योन्यं कराभ्यां ब(बा)हुयुग्मकम् ॥ ४८ ॥

सायङ्काले विधातव्यो बाहूपेल्लणकः श्रमः ।
आश्लेषयोग्य(ग्यं) सुश्लक्ष्णमूर्ध(र्ध्व) बाहुतल[1]ोन्नतम्[2] ॥ ४९ ॥

दृढं निखा[3]नितं स्तम्भं चर्चितं चन्दनादिना ।
उत्प्लुत्याक्रम्य सक्थिभ्यां बाहुभ्यां चैव वक्षसा ॥ ९५० ॥

दृढं सम्पीड्य तं[4] स्तम्भं पद्भ्यामूर्ध्वं[5] समाश्रयेत् ।
बा[6]हुभ्यां च ततोरुभ्यामावर्तनविवर्तनैः ॥ ५१ ॥

अ[7]धश्चोर्ध्वं च संश्लेष्य स्तम्भेन श्रममाचरेत् ।
एवं कृतश्रमा मल्लाः पुष्टा हृष्टाः समागताः ॥ ५२ ॥

विज्ञपेयुर्महीपालं मल्लाध्यक्षपुरःसराः ।
पार्ल्य(ल्यः) पूर्णा इहास्माकं पोषिता च निजा तनु(नुः) ॥ ५३ ॥

जितश्रमा वयं जाता नियोधयं[10] महीपते ।
इति विज्ञाप्यमानस्तु गुणा(णां)स्तेषां विचारयेत् ॥ ५४ ॥

भेदैर्द्वादशभिर्युक्तां[11]न्मिथस्तेषां नियोधने ।
महाकायस्तु यो मल्लो भा[12]री स परिकीर्तितः ॥ ५५ ॥

बलाढ्यः कथ्यते प्राणी ऊ[13]र्जलश्च सु[14]शिक्षितः ।
संस्थाननिरतो ज्ञेयो यः स्थाने सुस्थितासनः ॥ ५६ ॥

श्रमं न याति यो युद्धे बहुयोधी स कथ्यते ।
विज्ञानेन गृहीतोऽपि यो मुञ्चति न भाषते ॥ ५७ ॥

ना[15]स्फालयति हस्तेन सम्बद्धं[16]ः पतितो ह्यधः[17] ।

---

१ D न । २ A तः । ३ D पाति । ४ A त । ५ A र्धं । ६ D adds this line । ७ A आधाश्चार्धं । ८ D पाल्याः । ९ D स्वपुत्रवत् । १० A ज । ११ D क्ताः मि । १२ A भी । १३ D ऊर्ज्व A ऊर्जा । १४ A परी । १५ D न । १६ A न्धः । १७ A रधेः ।

वलनं सहते यस्तु स भवेद्वलनेसहः ॥ ५८ ॥

यो रक्षति हि विज्ञानं मल्लो रक्षणको ह(म)तः ।
आशु[1]प्रयुक्ते विज्ञाने[2] तदपाये परं[3] द्रुतम् ॥ ५९ ॥

स मल्लो ढकणो धन्व्य[4]ः शीघ्रविज्ञानकारकः ।
परप्रयुक्तं[5] विज्ञानं पररन्ध्रं च पश्यति ॥ ९६० ॥

दर्शनाख्यक्रियायोगान्म[6]ल्लो दर्शन उच्यते ।
उत्प्लुत्य यो लगेत्कण्ठे स मल्लो लँगनो भवेत् ॥ ६१ ॥

मर्यादापालको युद्धे नियतः परिकीर्तितः ।
एवंविधगुणान् मल्लान् समकायवयोबलान् ॥ ६२ ॥

नियुद्धे योजयेद्राजा करास्फालनपूर्वकम् ।
प्रतिज्ञां ते च जल्पन्ति शृणुयात्तां नराधिपः ॥ ६३ ॥

घटिकाभ्यन्तरे देव मोटयेत्प्र(प्र)तियोधिनम् ।
मल्लद्वयं मोटयामि जल्पत्येवं तथापरः ॥ ६४ ॥

मल्लत्रयं भिनद्मीति वदेदन्योऽपि ज्येष्ठकैः[10] ।
विज्ञानेनाहमेकेन पातयामीति भाषते ॥ ६५ ॥

यस्मिन्नेव स्थित(तः)स्थाने तस्मिन्नेव निपातयेत्(ये) ।
एवं कृतप्रतिज्ञांस्तांन्विमर्द्य च ततो निशि ॥ ६६ ॥

महत्तरं समाहूय महीपालः समादिशेत् ।
अलङ्कुरुष्व वाक्याडं[11] त(चाख्खाडव)न्नेहं देवमण्डपम् ॥ ६७ ॥

इत्यादिष्टो नृपेन्द्रेण ततो ग्रा(ग्र)हमहत्तरः ।
स्तम्भैः षोडशभिर्युक्तं गृहं कृत्वा समायतम् ॥ ६८ ॥

पश्चिमे तु दिशाभागे चतुरस्रां सुविस्तृताम् ।
सार्धहस्तसमुत्सेधां वेदिकां तत्र कारयेत् ॥ ६९ ॥

---

१ A श्रु । २ D तदपाय । ३ D परमं । ४ A न्या । ५ A क्त । ६ A द्म । ७ A लगतो । ८ A ध । ९ A म । १० A कम् । ११ D ढ्यं ।

वेदिकाग्नेयकोणे तु कुर्याच्छ्रीकृष्णमण्डपम् ।
वेदिकायां[1]ः पुरोदेशे दशहस्तसुविस्तृता(त)म् ॥ ९७० ॥

त्रिंशद्धस्तपरीणाहं वितस्तिद्वयघातवत् ( खातकम् ) ।
पूरयेच्च ततः खातं ग्रामसञ्जातया मृदा ॥ ७१ ॥

मृत्तिकां सेचयेत्तोयै[2]ः कुद्दालैश्च निखातयेत् ।
चौ[3]र(ल)येच्चालिनीभिश्च दृषदादीन्विशोधयेत् ॥ ७२ ॥

सुश्लक्ष्णां मृत्तिकामीषदार्द्रां[4] शुद्धां च कारयेत् ।
एवमक्खोडकं कृत्वा प्रातरागत्य भूपतिम् ॥ ७३ ॥

विज्ञापयेद्गृहामात्यः सर्वं सम्पादितं मया ।
ततः कौतुकसंयुक्तो[6] मल्लाध्यक्षं समादिशेत् ॥ ७४ ॥

आवाहँयाखिलान् मल्लान् नियुद्धायेति भूपतिः ।
गृहीतर्वचना(नो)ऽध्यक्षो विनयानतकन्धरः ॥ ७५ ॥

निर्गत्य च तथा कुर्याद्यथादिष्टं महीभुजा ।
ततः करेणुकाः सर्वाः प्रेषयेच्च पृथक् पृथक् ॥ ७६ ॥

ज्यैष्ठिकानां च मल्लानां तूर्याणि च बहूनि च ।
सौवणशृङ्खलास्तेषु नेत्रपट्टं पृथग्विधम् ॥ ७७ ॥

शृङ्गारार्थं यथायोग्यं दापयेच्च पृथक् पृथक् ।
चन्दनालिप्तसर्वाङ्गाः स्वणशृङ्खलभूषिताः ॥ ७८ ॥

दधिमण्डलभक्तांश्च भुक्त्वा स्वल्पं प्रसाध्य[11] च ।
गृहीताक्षतदूर्वास्ते आरोहेयुः करेणुकाः ॥ ७९ ॥

म(ग)व्हरीतूर्यनादेन समायाता नृपाङ्गणम् ।
कृतभोजनशृङ्गारै[12]ः सायाह्ने सेवकैः सह ॥ ९८० ॥

पुत्रमित्रकलत्रैश्च विशेदाखाडकं तदा ।
भुजास्फालननादेन पूरयन्तो दिगन्तरम् ॥ ८१ ॥

१ A याम् । २ A ड । ३ A सा । ४ A दाशुद्धां चापि । ५ A कावडं D खाडकं ६ । D कं ।
७ A व्हायाखि । ८ A वयतो । ९ D पश्येत् । १० A ङ्ग । ११ A घ । १२ A रे ।

विज्ञपयेयुस्ततो भूपं सर्वे[2] मल्लाः समागताः ।
पुष्पाञ्जलिं गृहीत्वा च कृष्णे[3] कृष्ल(त)नमस्कृतिः ॥ ८२ ॥

सिंहासनं समारुह्य सर्वान्[4]स्थाने निवेशयेत् ।
यस्य येन कृतं[6] पूर्वं युद्धाय करताडनम् ॥ ८३ ॥

आहूय तानसौ मुक्त्वा योधयेत्पृथिवीपतिः ।
चर्लणं परिधास्यं च दृढं[9] कच्छां विवेष्टय च ॥ ८४ ॥

जूटकं बन्धयित्वा तु भुजावास्फाल्य सन्मुखौ ।
नियुध्येतामुभौ मल्लौ रोधनैः प्रतिरोधनैः ॥ ८५ ॥

प्रकोष्टधारणैश्चैव मणिबन्धविमोचनैः ।
कच्छधारणमोक्षाभ्यां पातनैरधरैः[10](रव)पातनैः ॥ ८६ ॥

बाहुसङ्घट्टनैः[11]श्चैव तथा पादैरघट्टनैः ।
आश्लेषैः पीडनैश्चैव विश्लेषैरपसर्पणैः ॥ ८७ ॥

उत्प्लुत्यै[12] लैंगनैः[13] कण्ठे जठरे पृष्ठतस्तथा ।
भ्रमणै[14]र्भ्रामणैश्चैव वलनैर्वर्तनैस्तथा ॥ ८८ ॥

सन्निपातावधूतैश्चै[15] तोलनैः स्फालनैस्तथा ।
नानाविधैश्च विज्ञानैर्विविधैर्बन्धै[16]र्मोचनैः ॥ ८९ ॥

श्रान्ताश्चोत्तानपतिताः स्वेदार्द्रीकृतविग्रहाः ।
कर्दमालिप्तसर्वाङ्गा मुकुलीकृतलोचनाः ॥ ९९० ॥

मुञ्चन्तः श्वासफुत्कारं दृश्यन्ते[17] ते समाकुलाः[18] ।
द्वावप्येवंविधौ[19] दृष्ट्वा समीकुर्यान्नृपेश्वरः ॥ ९१ ॥

आ(अ)श्रमस्य जयं दद्यान्मोटनाच्च विशेषतः ।
एवं नियोध्यं[20] तान् सर्वान् सजयान् भूरिकाञ्चनैः ॥ ९२ ॥

वस्त्राभरणैर्यानैर्वाहैश्च परितोषयेत् ।
विसर्ज्य[21] च ततो मल्लान् सेवकानितरानपि ॥ ९३ ॥

---

१ A नमे । २ A सर्वं । ३ A ष्ण । ४ A वैं । ५ A वि । ६ A तः । ७ D कृत । ८ A वल्लभं । ९ D ढां । १० D घः । ११ A नेचै । १२ D त्य च । १३ D लंगत् । १४ A चर्मणो । १५ A तेश्च । १६ D द्ध । १७ D ते । १८ ध्वनाकुलान् । १९ A धं । २० D ज्य । २१ A सृज्य ।

मल्लयुद्धप्रकार[1]न्तं ब्रुवाणः प्रमदान्वितः ।
एवं मल्लविनोदेन नीत्वा वासरशेषकम् ॥ ९४ ॥

सुखासनं समारुह्य प्रविशेद्राजमन्दिरम् ।
मल्लानां लक्षणं युद्धं[2] श्रम[3]श्च परि[4]पोषणम् ॥ ९५ ॥

कथितं सोमभूपेन सर्वमल्लोपकारकम् ।
उक्तो मल्लविनोदोऽयं सोमेश्वरमहीभुजा ॥ ९६ ॥

इति मल्लविनोदः ॥ ६ ॥

ताम्रचूडविनोदस्तु साम्प्रतं परिकीर्त्यते ।
कुक्कुटानां च सद्भिस्तु ज्ञातव्या जातयः पुरा ॥ ९७ ॥

आकारः पोषणं चैव शु[6]भं रूपं च शाकुनम् ।
आयोधनप्रकारश्च व्यवस्थाश्च जयाजये ॥ ९८ ॥

कुक्कुटानामिदं ज्ञात्वा पश्चात्कुर्यात्तदाहवम् ।
पादौ सितौ सिते चारे[7] नखराः पाण्डुराः शुभाः ॥ ९९ ॥

लोचने च तथा शुक्ले शुक्लप्राणो विशेषतः ।
शङ्खध्वनिनिभो नादस्तीक्ष्णाग्रा पिच्छसन्ततिः ॥ १००० ॥

कम्बुग्रन्थि[10]निभं शीर्षं[11] यस्यासौ शङ्खजाति[12]कैः ।
चरणौ पाण्डुरच्छायौ दीर्घा[13]श्चाङ्गुलयः कृशाः ॥ १ ॥

दीर्घो देहस्तथा कार्श्यं वक्रौ[14] दीर्घा च नासिका ।
मृदुप्रहारसंयुक्तं मन्द[15]युद्धं भवेत्स्थिरम् ॥ २ ॥

यस्यासौ स भवेज्जात्या कुक्कुटो गुरुसंज्ञकः ।
उन्नतः सितवृत्ताङ्घ्रिः पृथुवक्षस्थलो महान् ॥ ३ ॥

आक्रम्य युध्यते शूर अंशुजातिः प्रकीर्तितः ।
सूक्ष्मा[16]रः शोणपादश्च सितशुक्तिसमन्वितः ॥ ४ ॥

शुक्लाक्षो दीर्घश[17]ब्दश्च जात्या नारः प्रकीर्तितः ।
हारिद्रौ चरणौ वा[18]पि सितौ वा कृष्णबिन्दुकौ ॥ ५ ॥

---

१ A रान्ते । २ A द्धं । ३ A माच्च । ४ D तो । ५ A हवमिच्छद्भिर्ज्ञा । ६ A श्रुतं । ७ A र । ८ A ण्ड । ९ A ण । १० A न्धि । ११ A र्षं । १२ A की । १३ A र्घे । १४ A क्र । १५ D द्रुय । १६ A क्ष्मो । १७ A रावो । १८ D चा ।

कांस्यवर्णौ भवेतां वा प्रियङ्गुकणविन्दुकौ ।
कृष्णाश्च नखरा यस्य कृष्णो वा चित्रितोऽपि वा ॥ ६ ॥

रक्ते[1] दशौ[2]स्त(त)लस्तब्धो गृध्रजातिः स कुक्कुटः ।
श्यामला शुक्त[3]यो यस्य किञ्चित्पाण्डुरतां श्रितः ॥ ७ ॥

कृष्णां[4] रेखा वचौ[5]लम्भो जात्यां[6]तिगोः स कथ्यते ।
कृष्णवर्णोऽपि दीर्घाङ्गो वक्रतुण्[7]डो र[8]णे क्षमः[9] ॥ ८ ॥

बृहन्नाथो(दो)महाकायो जात्या श्रोणिः प्रकीर्तित[10]ः ।
कृष्णपादो मारनेत्रः कृष्णपक्ष्मातिदीर्घकः ॥ ९ ॥

वं[11]श्वयं[12]श्वं शिरो युक्ते(द्धे) सर्पजातिः प्रकीर्तित[13]ः ।
चरणौ हरितच्छायौ धारे शुक्ले च लोच[14]ने ॥ १०१० ॥

आकारो वर्तुलो यस्य तं विद्यात्कूर्मजातिकम् ।
कन्धरादेशसञ्जातं पिच्छं केसरं[15]संज्ञितत् ॥ ११ ॥

त्रिकस्थानसमुद्भूतं वर्हमन्तर[16]कं विदुः ।
पुच्छे जातानि दीर्घाणि सक्थिस्थानि भुजानि तु ॥ १२ ॥

शाखादयो[17]ऽपि कथ्यन्ते महिलापिच्छसंज्ञया ।
तेषामूर्ध्व[18]गते पिच्छे दीर्घेषु(पुं)पिच्छसंज्ञिते ॥ १३ ॥

योषितिपिच्छवहिस्थानि वालश्चान्यनृ[19]जूंनि तु ।
निर्मांसे (सो) पादतलकः ह्रस्वाच्च(श्च)रणशाखिकाः ॥ १४ ॥

आरे वृत्ते तथा जङ्घे संश्लिष्टसम[20]शुक्तिके ।
[21]बृहतीबीजसङ्काशा शुक्तयः कूर्पराश्रिताः १५ ॥

क्रोडपश्चिमपादाभ्यां पादयोर्वक्रता भवेत् ।
क्रोडदेशो विशालः स्याद् ग्रीवा दीर्घा च पीवरा ॥ १६ ॥

स्थूलं शिरस्तथा वृत्तं गर्भस्थे लघुलो[22]चने ।
स्थूला कुब्जा तथा वासा पेशलं तनु वासरम् ॥ १७ ॥

---

१ A क्तौ । २ A शो । ३ A क्ल । ४ A ष्णले । ५ A A चो । ६ A त्यागोः । ७ A तां । ८ A रण । ९ A णः । १० A ताः । ११ A च । १२ A यश्च । १३ D ता । १४ A रोच । १५ D सज्ञि । १६ A रिकां । १७ A ये । १८ A र्ध । १९ D जंति । २० A सू । २१ A ब्रहन्ती ।
२२ A भोज ।

केसरं विशदं दीर्घं तथा मकरिका वरां[1] ।
अंसौ समुन्नतौ शस्तौ ह्रस्वाह्रस्वविलम्बिनौ[2] ॥ १८ ॥

कर्कशानि च पिच्छानि पृष्ठं कूर्मवदुन्नतम् ।
संलग्नः पुच्छसन्धिः स्यात्समं पुच्छं[3] प्रशस्यते ॥ १९ ॥

दीर्घा[4] वालधिका शस्ता महिलापिच्छकं लघु ।
[5]पुंपिच्छे वायसे (चायते) स्यातां पृष्ठभागोऽतिविस्मृ(स्तृ)तः[6] ॥ १०२० ॥

एवं लक्षणसंयुक्तान् सुभटाँन्कुक्कुटान् वरान् ।
धारयित्वा कुलाये च तज्ज्ञैस्तान् परितो(पो)षयेत् ॥ २१ ॥

रसोदनैर्घृतोपेतैर्दध्ना च परिमिश्रितैः ।
अङ्गुष्ठतर्जनीयोगान्निष्पीड्य शिखरं दृढम् ॥ २२ ॥

इतरैः कराशाखाग्रैर्वक्त्रं व्यादाय भोजयेत् ।
धात्रीफलप्रमाणांश्च ग्रासान् यत्नेन भोजयेत् ॥ २३ ॥

पाययेच्छीतलं तोयं क्षालयेदुष्णवारिणा ।
मुखं सशेखरं लिम्पेन्मृदा लवणयुक्तया ॥ २४ ॥

निष्पावपत्रस्वरसैर्निशया वा विलेपयेत् ।
[10]चङ्क्रामयेत्मनाक् पश्चाद्यामेकमतन्द्रितः ॥ २५ ॥

खेलयेत्पांसुले स्थाने करीषे वा सुचूर्णिते ।
मध्यंदिने कुलायेषु निक्षिपेत् कुक्कुटान् पृथक् ॥ २६ ॥

सायं पुनस्तथा भोज्यं[11] (ज्याः)तैलेनाभ्यज्य युक्तितः ।
शेखरं मुखदेशं च जङ्घां पादतलं तथा ॥ २७ ॥

उष्णाम्बुप्लुतवस्त्रं तु निष्पीड्य स्वेदयेच्छनैः ।
वासयष्टिं[12] समारोप्य शाययेन्निशि कुक्कुटान ॥ २८ ॥

मार्जारादिभयाद्रक्षेत्प्रयत्नात्परिपालकः ।
एवं सम्पोष्य यत्नेन कुक्कुटान् युद्धकोविदान ॥ २९ ॥

१ D राः । २ D ह्रस्वौह्रस्वावलम्बिनौ । ३ A पुष्पं । ४ A र्घे । ५ पुपि । ६ A गेऽतिविस्मृतः, गोविनिस्तत D गेतिविस्मृता । ७ A य । ८ A स । ९ A वाधि । १० A चक्रा । ११ A ज्य । १२ A ष्टि ।

पत्रिकालम्बनं कृत्वा ध्वजदण्डं समुत्क्षिपेत् ।
ततः प्रसादचित्तैश्च कुक्कुटाहवलम्पटैः ॥ १०३० ॥

प्रतिपक्षीकृतं(तैः) सार्धं योधयेत्कुक्कुटान्नृपः ।
प्रत्यर्थिषु तथा मुख्यां विधाय प्राणवल्लभाम् ॥ ३१ ॥

तया सह प्रकुर्वीत कुक्कुटाहवमुत्तमम् ।
वारे शनैश्चरे रात्रौ सम्मार्ज्य धरणीतलम् ॥ ३२ ॥

सुलिप्ते मन्दिरस्यान्तरालिखेद्व्रतिमण्डलम् ।
ग्रन्थिभ्यां नियतं सूत्रं कृत्वैकादशमुष्टिकम् ॥ ३३ ॥

चतुरस्रं प्रकुर्वीत तेन मण्डलकं समम् ।
प्राक्प्रत्यगायते रेखे द्वे मध्ये दक्षिणोत्तरे ॥ ३४ ॥

एवं नवपदं क्षेत्रं समं यत्नात्प्रकल्पयेत् ।
मध्यमं ब्रह्मणः कोष्टं प्राच्यमिन्द्रस्य कोष्टकम् ॥ ३५ ॥

वन्हेराग्नेयकं कोष्टं दक्षिणं यमकोष्टकम् ।
नैऋ(र्ऋ)त्यं नैऋ(र्ऋ)तं कोष्टं पाश्चात्यं वरुणस्य च ॥ ३६ ॥

वायव्यं वायुसंज्ञं स्यात् कौबेरं भैरवास्पदम् ।
ईशानमीशकोष्टं स्यात् तत्प्राच्यां बहिरालिखेत् ॥ ३७ ॥

सूर्यमण्डलकं वृत्तमर्धमिन्दोश्च मण्डलम् ।
दक्षिणं दिङ्मुखे लेख्यं क्षुरिके शक्रकोष्टके ॥ ३८ ॥

उत्तराग्रा भवेत्पूर्वा दक्षिणा पश्चिमानना ।
इन्द्रगेहाल्लिखेत्पूर्वं कोष्टकं तत्प्रमाणकम् ॥ ३९ ॥

तोरणालङ्कृतं कुर्यात्त्रिशूलत्रयभूषितम् ।
अग्निकोष्टस्य तत्कोणे चुल्लीवह्निन्दुकत्रिकम् ॥ १०४० ॥

आलिखेद्यमकोष्टस्थं याम्ये रेखासमाश्रिता(तम्) ।
मातृकागणमुद्दिश्य पङ्क्तितो बिन्दुसप्तकम् ॥ ४१ ॥

---

१ A समर्थ्य । २ D न्तेआ । ३ A न्धि । ४ A प्रच्या । ५ D नैर्ऋतं कोष्टं पाश्चात्यं ज्ञेयं तद्वरुणस्य च ।
६ A तेर । ७ D च्यामिन्द्रकोष्टकं । ८ A णोदङ्मुखं । ९ D ख्ये । १० A स्यायामे ।

त्रिकोणं[१] वारुणात्कोष्ठात्पश्चिमं[३] कोष्ठमालिखेत् ।
तत्कोष्ठमध्ये विलिखेत्कुक्कुटस्य पदद्वयम् ॥ ४२ ॥

आग्नेयं[४](य)शिरसं सर्पं[५] विलिखेद्वायुकोष्ठके ।
कौवेरे[६] भैरवो लेख्यो दक्षिणाशाशिरो(रा) महान् ॥ ४३ ॥

कपालं[७] कर्त्रिका(कां) हस्त(हस्ते) त्रिशूल(लं)डमरुं[८] दधत् ।
शालिपिष्टस्य कल्केन शङ्खकल्केन वा बुधः ॥ ४४ ॥

मण्डलं रतिनामेदं शुचौ देशे समालिखेत् ।
आचार्यो मन्त्रमुच्चार्य तत्तत्कोष्ठगतान्सुरान्[१०] ॥ ४५ ॥

[११]गन्धिभिर्विविधैः पुष्पैस्ताम्बूलैर्धूपदीपकैः ।
इङ्गिताकारतत्त्वज्ञैर्जयाजयविचक्षणैः ॥ ४६ ॥

सेवाकारैश्च संवेष्ट्य समन्ताद्रतिमण्डलम् ।
तत्रैको मोक्षको दक्षः पूर्वाभिमुखमास्थितः ॥ ४७ ॥

त्रिकोणकोष्ठकस्यान्ते स्थापनीयो महीभुजा ।
तत्रैकं शुभसंयुक्तं सम्प्राप्तविजयं पुरा ॥ ४८ ॥

पाण्डुरं तु सिते पक्षे कृष्णं कृष्णे तु कुक्कुटम् ।
मोक्षको नृहरेर्यानं[१२] कुक्कुटं गरुडं तथा ॥ ४९ ॥

ध्यात्वा समाहितो भूत्वा मन्त्रमुच्चारयेदिमम् ।
ॐ गरुडानां सुवर्चा पक्षपक्षि[१३]त्वन[१४]न्तरं[१५] ग्रवत अमा याहि स्वाहा ॥१०५०॥

पक्षौ वक्षः प्रयत्नेन त्रिकोणस्थपदस्थितम्[१६] ।
जयेत्युक्त्वा विमुञ्चेत्तं[१७] प्राङ्मुखं चरणायुधम् ॥ ५१ ॥

विमुक्तस्ताम्रचूडस्तु यद्वर्णं कुसुमं स्पृशेत् ।
चञ्च्वा[१८] तद्वर्णमाशंसेत्[१९]कुक्कुटं प्रतियोधिनम् ॥ ५२ ॥

ततोऽपसार्य पुष्पाणि वारिणा परिषिच्य[२०] च ।
पुनस्तेनैव करुणं मोक्तव्यश्चरणायुधः ॥ ५३ ॥

१ A णव । २ A को । ३ A मः । ४ D यः । ५ A र्प्यं । ६ A रू । ७ D ल । ८ A रू । ... १२ A हरिमात्मानं । १३ A य । १४ A त । १५ A
९ A तत्कोष्ठं च । १० A न्श । ११ D सुगन्धै । ... २० D षिं ।
न तरयं । १६ A ताम् । १७ D त्तत । १८ A ञ्चा । १९ D मास्यति ।

संलग्नपिच्छैः[1] शीघ्रं चेत्तोरणाभिमुखं व्रजेत् ।
ऊर्ध्वं दक्षिणनेत्रेण संविष्टो विजयं वदेत् ॥ ५४ ॥

इन्द्रकोष्ठं समाविश्य क्षुरिकामु[2]त्तराननाम् ।
मुष्टौ [3]स्पृशन् जयं शंसेदितरां वाँ[4]ऽग्रदेशतः ॥ ५५ ॥

तस्मिन्कोष्ठे समास्थाँ[5]य घनवर्षमहीतले ।
दक्षिणे वित्तवर्षे च जयं शंसत्यसंशयँ[6]म् ॥ ५६ ॥

तत्र थो[7] यदि वीक्षेत पादयोरन्तरालकम् ।
दक्षिणेन समावृत्य पश्यन्पृष्ठं जयं वदेत् ॥ ५७ ॥

तत्रस्थं(स्थो) च[8]रणाग्रेण दक्षिणेन शिखी स्पृशेत् ।
नासां वा नखराग्रेण मस्तकं वा जयी भवेत् ॥ ५८ ॥

परस्परसँ[10]मं स्पृष्टं पक्षयुग्मं समुत्क्षिपेत् ।
तत्रस्थो जयमाशंसेत्कूँ[11]जन्वा दक्षिणं व्रजेत् ॥ ५९ ॥

अनलस्य गृहे स्थित्वा स्थित्वा पिच्छनिभः सरन् ।
पक्षावास्फालयन्[12]वापि जयमाख्याति निश्चितम् ॥ १०६० ॥

तत्रस्थः पश्चिमं बि[13]न्दुं स्पृशन्स्था(शंश्वा)प्यप्रदक्षिणम् ।
परिवृत्य व्रजं[14]न्शीघ्रं कुक्कुटो विजयी भवेत् ॥ ६१ ॥

दक्षिणं कोष्ठमाविश्य कूटजं लग्नापिच्छगः ।
प्रसार्य कन्धरादूर्ध्वं सँ[15]म्पश्यन् जयमादिशेत् ॥ ६२ ॥

तत्र प्रदक्षिणं कृत्वा घटयित्वा तु वर्त्मनि ।
दक्षिणे पुच्छमाधूय नेत्रं भित्त्वा जयी भवेत् ॥ ६३ ॥

तत्रस्थान्बिन्दुकांश्चञ्च्वा विशमाने(नो) च संस्पृशेत् ।
[16]मूलं चाँ[17]दाक्षि[18]णो रा(या)यात्कुक्कुटो विजयी भवेत् ॥ ६४ ॥

नैऋ(ऋं)[19]त्यं कोष्ठमासाद्य विनिमील्य विलोचने ।
शेते जठरमुन्नम्य जयँ[20]वांश्चरणायुधः ॥ ६५ ॥

१ D च्छं। २ D नु। ३ D स्पर्श। ४ D चा। ५ A स्थां। ६ A यः। ७ A स्था। ८ A तू। ९ A स्व D ख। १० D म। A ११ त्कूजत्वा। १२ D यित्वा। १३ A न्दुस्पृशंस्वच्छा F शंश्वस्था। १४ A जंशी। १५ D सजयन्। १६ A स्थू। १७ D वा। १८ A णाराया। १९ D तं। २० A यंवा

तत्रस्थानलकोणेन कृकवाकुर्विनिर्गतः ।
तद्गृहे मक्षिकां वापि कीटं वा खण्डयञ्जयी ॥ ६६ ॥

पुच्छं प्रसार्य वा तत्र जानुभ्यां वा महीं स्पृशेत् ।
निर्गत्य पुरुषं [1]चञ्च्वा संस्पृशन् वा जयी भवेत् ॥ ६७ ॥

जलेशस्य गृहे स्थित्वा दक्षिणं चरणं पुरः ।
प्रसार्य चञ्च्वा भूदेवीं स्पृशन् विजयवान् भवेत् ॥ ६८ ॥

तत्रस्थं दक्षिणं भ्रान्त्वा मुकुलीकृतपुच्छकम् ।
व्याघ्रवच्चालयेद्यस्तु स जयी कुक्कुटो मतः ॥ ६९ ॥

विकीर्य पुच्छं तत्रस्थं चञ्च्वा पृष्ठं स्पृशन्नपि ।
पादेन विलिखन् भूमिं जयमाप्नोति कुक्कुटः ॥ १०७० ॥

तस्मा[2]दुद्घाट्य वदनं ग्रीवामूर्ध्वं प्रसार्य च ।
[3]जृम्भते यस्तु पक्षीशस्त्वरितं विजयी भवेत् ॥ ७१ ॥

कुलायकोष्ठके तिष्ठ[4]न्नैव्रजन् [5]घटयन् दृशौ ।
शिशुवज्जृम्भमाणस्तु विजयी चरणायुधः ॥ ७२ ॥

आसाद्य कोष्ठकं वा(प्रा)च्यमुपविश्य महीतलम् ।
चञ्च्वा स ताडयन् पक्षी विजयं ध्रुवमाप्नुयात् ॥ ७३ ॥

[6]तत्रत्यो रङ्ग[7]मूर्धानं खादं[8]श्चञ्च्वा जयी भवेत् ।
साशं ( सोऽश्नन् ) [9]दंष्ट्रांकुरं वापि कू[10]जंन्वाऽपि मुहुर्मुहुः ॥ ७४ ॥

ऐशाने कोष्ठके स्थित्वा भै[11]रवायुधवाससी ।
चक्षुर्वा संस्पृशञ्चञ्च्वा कुक्कुटो जयभाग् भवेत् ॥ ७५ ॥

कुबेरभवने स्थित्वा निक्षिपेद्गजवत्पदम् ।
चञ्चुना दक्षिणे भागे भूमौ घर्ष[12]ञ्जयी भवेत् ॥ ७६ ॥

[13]उत्क्षिपन्नपि पुष्पं च मोक्षं कर्ष( र्षन् ) जयी भवेत् ।
निर्गत्य शाम्भवात्कोष्ठा[14]त् भ्रमित्वा च प्रदक्षिणम् ॥ ७७ ॥

१ A धन्वा । २ A दुद्यम्य । ३ D ल । ४ A न्त्र । ५ D घटयेद्दृशौ A घटयन्दिशौ । ६ A त्रान्यो ।
७ D र्घ्नौ । ८ D दन्वावि । ९ A दष्ट्राङ्कुरवा । १० A जत्वा । ११ A नैर । १२ A जयावहम् ।
१३ This line is omitted in D । १४ A ष्ठे ।

चञ्च्वा स्पृशन्निशानाथं जयमाप्नोति कर्मठः ।
ब्र[1]ह्मणः कोष्ठके स्थित्वा चक्षुषी[2] विनिमीलयन्[3] ॥ ७८ ॥

उत्क्षिपन् वदनं स्थित्वा विजयी चरणायुधः ।
तत्रस्थः कुक्कुटो गाढं ग्रसते गगनाङ्गणम् ॥ ७९ ॥

उत्क्षिपन् दक्षिणं पक्षं समानं विजयी भवेत् ।
रेखाद्वितीयसम्पाते कीलके वहते[4] यदि ॥ १०८० ॥

कीलकं वापि चाँक्रामेद्धन्याद्वा यदि घोणकम् ।
मध्यमेन खुरेणाथ वामं कण्डूयते यदि ॥ ८१ ॥

धुनुते वामतः पुच्छं तस्य चक्षुर्विभिद्यते ।
घर्षतो यदि चञ्च्व[6]ग्रं नखस्योपरि संस्पृशेत् ॥ ८२ ॥

सन्धिं वा जानुनस्तस्य लोचनं स्फुटति स्फुटम् ।
वामेन चरणेनाथ स्पृशत्यङ्गं यथा निजम् ॥ ८३ ॥

तदङ्गं भिद्यते तस्य नासाँ चञ्चैव भज्यते ।
चरणस्य बहिर्भागं चञ्च्वग्रेण निहन्ति चेत् ॥ ८४ ॥

पुच्छं प्रसार्य धुनुते कुक्कुटः स पलायते ।
पिच्छानि सर्वगात्रेषु विकीर्णानि समानि चेत् ॥ ८५ ॥

दक्षिणं पादतलकं चञ्च्वा कोश्चति चेत्स्वकम् ।
नखं वामपदाक्रान्तगाढं यदि विकर्षति ॥ ८६ ॥

भिन्दन्[10]नक्षस्य नयनं कुक्कुटः समराङ्गणे ।
दक्षिणेन पदेनाङ्गं संस्पृशन् परघातनः ॥ ८७ ॥

दक्षिणे नतं[11]चेष्टाभिरादिशेज्जयमात्मनः ।
ग्रीवामाकुञ्च्य रसनां[12] दर्शयन् यदि जृम्भते ॥ ८८ ॥

उत्क्षिपेच्च मुहुः शीर्षं सङ्ख्या( ङ्ख्ये ) वा विषमे जयः ।
दक्षिणं पादमुत्क्षिप्य मुष्टिं[13] बद्धावतिष्ठते ॥ ८९ ॥

---

१ A श्र । २ A षा । ३ D येत् । ४ D धुव A F द्व । ५ A चक्रोमेद । ६ A ञ्च्वा । ७ A सां । ८ A ञ्चवा । ९ These two lines are omitted in D । १० A द । ११ A णोत्र । १२ A च । १३ A ष्टिबद्धव ।

उत्क्षिप्तं दक्षिणं रूपं जयमाप्नोति निश्चितम् ।
प्रसार्य दक्षिणं पादं सह पक्षेण कुक्कुटः ॥ १०९० ॥

अस्पृशन् रभसा कर्षञ्जयं शंसंत्यवारितम् ।
दक्षिणाङ्कुताचे(श्चे)ष्टाः सौष्ठवेन समन्विताः ॥ ९१ ॥

रत्यामन्यत्र देशे वा खलके वा जयावहाः ।
गतिः प्रदक्षिणा शस्ता वीक्षणं चारु दक्षिणम् ॥ ९२ ॥

अङ्गस्य गाढता श्रेष्ठा कथिता सोमभूभुजा ।
रत्यां निरीक्षमाणानां दक्षिणां(णं) जयवादिनाम् ॥ ९३ ॥

दीपोत्थकज्जलेनैषां शिखरे तिलकं न्यसेत् ।
निदाघे घटिताः पक्षा आषाढे सम्भवन्ति च ॥ ९४ ॥

यावदाश्वयुजं मासं तावत्तिष्ठन्ति कोमलाः ।
अत ऊर्ध्वं दृढाः पक्षास्ततो युद्धं प्रकल्पयेत् ॥ ९५ ॥

योधयेत्फाल्गुनं यावत्तत ऊर्ध्वं न योधयेत् ।
रत्यां निरीक्ष(क्षि)ता ये तु कुक्कुटा जयकारिणः ॥ ९६ ॥

प्रातः स्वल्पं प्रभोर्ज्याथ निरीक्ष्याः पुनरेव ते ।
शुभाश्चेष्टा भजेयुर्ये प्रभाते कुक्कुटाः पुनः ॥ ९७ ॥

युद्धार्थं परिकल्प्यास्ते पञ्च सप्त नवाथवा ।
पट्टैश्च पट्टिकाभिश्च चन्दनैः कुङ्कुमैरपि ॥ ९८ ॥

माल्यैराभरणैश्चैव मण्डनीयास्तु नर्तकाः ।
वादकाः पुष्पमालाभिर्मण्डनीयाश्च लेपनैः ॥ ९९ ॥

अन्योन्यविजयस्वच्छाः(स्थाः) कुक्कुटायोधलम्पटाः ।
कुक्कुटायोधविज्ञाने तज्ज्ञा भूष्याश्च मण्डनैः ॥ ११०० ॥

सेवकारान् जयज्ञांश्च विशेषेण विभूषयेत् ।
उच्छ्रितध्वजकादन्ये ध्वजं हर्तुं समुद्यताः ॥ १ ॥

१ D सत्येन । २ D ष्ठावन । ३ D हः । ४ A त्या । ५ D गज । ६ A ते । ७ A त्या ।
८ A यो । ९ A याज्ञा । १० A त्थि । ११ A वान्य ।

तूर्यनादेन संहृष्टाः कुर्वन्तः सिंहगर्जितम् ।
कल्पितान् कुक्कुटान् श्लिष्टान्[1]संयोज्य च पुनः पुनः ॥ २ ॥

प्रहरत्रितयादूर्ध्वं गच्छेयुः खलकं पुरः ।
त्रिंशद्धस्तपरीणाहं सुवृत्तं वेदिकावृतम् ॥ ३ ॥

बहुभिर्मेढकै[2]र्बद्धं समन्तान्मृदुभूमिकम् ।
पांसुकर्दमपाषाणैर्वर्जितं सुसमं दृढम् ॥ ४ ॥

पूर्व[3]द्वारसमोपेतं पुष्पमण्डपिकायुतम् ।
प्रतीच्यां कल्पितास्तेऽपि पूर्ववृद्धायनोच्छ्रितम् ॥ ५ ॥

खलकं कारयेद्राजा मण्डपेन समन्वितम् ।
राज्ञः पक्षस्थिताः सर्वे विशेयुः[4] खलकं पुरा ॥ ६ ॥

उत्तरे दक्षिणे वापि दिग्भागे खलकान्त[5]तः ।
आच्छाद्य कुक्कुटान्वस्त्रै[6]स्तिष्ठेयुः पङ्क्तिस्तु[7](स्तु)ते ॥ ७ ॥

प्रतिपक्षागमालोक्[8] कारयेत्तत्पराजयः(यम्) ।
ततो राजा समभ्येत्य[9] वेदिकां परिभू[10]षयेत् ॥ ८ ॥

अन्तःपुरपुरन्ध्रीभिः प्राणवल्लभया यु[11]तः ।
पूर्वोक्तेन प्रकारेण तदन्यां दिशमाश्रिताः ॥ ९ ॥

नृपपक्षस्थिताः सर्वे तिष्ठेयुर्गलगर्जनाः ।
ततः पूर्व[12] प्रविष्टा[13] ये चेष्टाविज्ञानकोविदाः ॥ ११ १० ॥

वीक्षे[14]रन्त[15]र्व्यमुद्घाघन्कु( न्नन्तरुद्घाट्य कु )क्कुटान्स्वान्पृथक् पृथक्
तत्र यः शुभचेष्टाभिरन्वितस्तान्नियोधनम् ॥ ११ ॥

प्रकुर्युः कुक्कुटं तज्ज्ञा आरे चान्यो[16]ऽस्य तेजयेत् ।
क्षुरिकाग्रेण संलेख्य पुत्रिकां धरणीतले ॥ १२ ॥

तन्नेत्रमृदमादाय दक्षिणारानने क्षिपेत् ।
यथा तैक्ष्ण्यं भजेदारा तथा कुर्वीत कोविदः ॥ १३ ॥

१ A ष्ट्यायुद्धायोग्याश्च वा, श्लिष्टान् समस्तुक्तिकवायुना । २ D डकैर्बद्धं सङ्गतान् । A ढके तद्वत्स । ३ A पूर्वे । ४ A षा । ५ A त्त । ६ A स्त्रि । ७ A क्य । ८ D खलकेतत्प । ९ D सभामेत्य । १० A प । ११ D न्वि । १२ D र्वं । १३ A ति । १४ A क्ष्ये । १५ खन्यमुद्घाट्य कुक्कुटान् । १६ D न्यौस्थि

आरे[1] सुनिशिते कृत्वा भूमिं[2] संसिच्य[3] वारिणा ।
तन्मृदा लेपयेत्पादावूर्ध्वं तालुं[4] च शेखरम् ॥ १४ ॥

अनेनैव प्रकारेण कुर्वीरन्(र्वाणः) प्रतिशस्यते ।
मिश्रपादो जयेच्छ्वेतं तं श्वेतो जयमेचकम् ॥ १५ ॥

मिश्रपादो जयेत्कृष्णं[5] एवं पक्षान्तरैः सह ।
योधयेत्कुक्कुटौ[6] पश्चाद्धीरनीराजिताबुभौ ॥ १६ ॥

विकीर्णकेसरगतौ चञ्चुप्रान्तेर्न[8] मस्तकम् ॥
कृकाटीं[9] केसरारूढां चिबुकालम्बिकूर्चिकाम्[10] ॥ १७ ॥

पृष्ठं पुच्छं तथा धृत्वा धृत्वा[11] पादप्रहारिणौ ।
मुखदेशं विभिन्दन्[12]तावारघातैः[13] परस्परम् ॥ १८ ॥

वमन्तौ रुधिरं वक्रात्स्रवच्छोणितमस्तकौ ।
मुहुर्मुहुर्धार्यमाणौ मार्जकैः पाय(द)तोदकैः[14] ॥ १९ ॥

वाससा विध्वं[15](ध्य)मानौ तौ[16] मुच्यमानौ पुनः पुनः ।
धावन्तावनुगच्छन्तौ भ्रमन्तौ तावपि[17] क्वचित् ॥ ११२० ॥

सम्मुखौ पुनरायातौ गोपायन्तौ च मस्तकम् ।
[18]सन्दष्टचञ्चुकौ शान्तौ पाता(दा)घातविवर्जितौ ॥ २१ ॥

निश्वसन्तौ विकास्यास्यं शिथिलीकृतपक्षकौ ।
श्लथपुच्छौ[19] स्तब्धपादौ तिष्ठन्तौ च संवेपथू(थु)[20] ॥ २२ ॥

सन्दष्टचञ्चुकौ शान्तौ पादाघातविवर्जितौ ।
लिखिताविव तिष्ठन्तौ जङ्घान्तर्न्यस्तमस्तकौ[21] ॥ २३ ॥

पक्षान्तरस्थितवक्रौ च मिथः संश्लिष्टकन्धरौ ।
घटिताविव तिष्ठन्तौ चेष्टा[22]हीनौ च कुक्कुटौ ॥ २४ ॥

न स्पृष्टव्यौ तथा भूमौ मार्जकैर्धर्मवर्तिभिः ।
अन्यथा मार्जकैः स्थित्वा प्रोञ्छ[23]नीयमसृक् स्रुतम् ॥ २५ ॥

---

१ D रा । २ A मि । ३ A घ्य । ४ A ल्रू । ५ A ण्ण । ६ A टं । ७ D करगा चञ्चु । ८ D निज । ९ A टी । १० A चं । ११ A कृ । १२ D द्याथचा । १३ A तं । १४ A के । १५ D विद्य । १६ A तु । १७ D न्तावपिच । १८ D Omits this line । १९ A क्षण । २० D यथापस्रू । २१ A गत । २२ D ष्ट । २३ D च्छा ।

आच्छाद्य[1] वाससा वक्त्रं कुक्कुटस्यो[2]धिमार्जकः ।
स्वेदयेच्च[3] (च्छु[4]) सितैरुष्णैर्वारं वारं मुखोद्गतैः ॥ २६ ॥

उद्धरेत्पतितं शीघ्रं वक्त्रं च रु(ऋ)जुतां[5] नयेत् ।
[6]श्रमार्तं पाययेत्तोयं मार्जकानामयं विधिः ॥ २७ ॥

कुक्कुटो यस्य पक्षस्थः प्रहरेच्च यदा यदा ।
तदा तदा प्रकुर्वीरंस्तत्पँक्षा गलगर्जितम् ॥ २८ ॥

मीलिते स्फुटिते [7]चापि लोचने कुक्कुटस्य हि ।
भग्ने तु चञ्चुपुटके श्रमे वा रक्तनिर्गमात् ॥ २९ ॥

स्वीकृत्यापजयं युद्धाद्वारणीयैः स्वकुक्कुटः ।
मृते पलायिते वापि दैवा[10]देव पराजयः ॥ ११३० ॥

पराजितानामारुह्य पृष्ठं[11] स्कन्धं जयावहाः ।
परिहार(स)परैर्वाक्यैर्लज्जयेयुः पराजितान्[12] ॥ ३१ ॥

परिहासपदार्थाभि[13]र्मर्मभिर्मि(न्मि)तगालिभिः ।
त्रि[14]पदीभिः सरामा(गा)भिर्गापयेयुः पराजितान् ॥ ३२ ॥

पराजितानां[15]माकृष्य ध्वजयष्टि(ष्टिं)बलात्ततः ।
जयतूर्यनिनादैश्च नृत्यद्भिर्नर्तकैः पुनः ॥ ३३ ॥

करेणुकां समारोप्य कुक्कुटं विजयोर्जितम् ।
भ्रामयेत्पुरवीथीषु जयी भवनमानयेत् ॥ ३४ ॥

दिवसत्रितयन्त्वेवं विना[16] पानीयसङ्ख्यया ।
योधयेत्कुक्कुटाँ[17]न्श्रेष्ठान् जयावधि महीपतिः ॥ ३५ ॥

अवधिं युद्ध्यमानस्य ज्ञातुं नालीं प्रकल्पयेत् ।
सौवर्णीं राजतीं वापि द्वाविंशत्यङ्गुलायताम् ॥ ३६ ॥

मध्ये वक्रां सुसंश्लिष्टां स्रोतसा[18]लोकवाहिनीम्[19] ।
वदनेन पिधायास्यं तस्यां[20] शून्यां (न्यं) तु[21] वेदयेत् ॥ ३७ ॥

---

१ A सा । २ D स्य वि । ३ A खे । ४ D मि । ५ A जनां । ६ A आ । ७ A त्काग । ८ D वा । ९ यस्तु । १० D तस्यदैव । ११ D न्वितान् । १२ A ताः । १३ A भि म । १४ A .... । १५ D नपा । १६ D चिन्ता । १७ D ह्रा । १८ D सो । १९ A नी । २० D स्याः । २१ D त्रु ।

जै[1]लपूर्णा[2](र्णा)तदन्येन वक्रेण विनिवेशयेत् ।
तोयपूर्णे घटे तस्याँ[3] रन्ध्रान्निष्कासयेज्जलम् ॥ ३८ ॥

ज्वा(ना)लायाः श्लक्ष्णभागस्तु मे[4]यस्त्वङ्गुलमानतः ।
एकद्वित्रिक्रमेणैवं यावत्स्याद्द्वादशाङ्गुलम् ॥ ३९ ॥

ततोऽर्कवारे सम्प्राप्ते योधयेदग्रयोधिनम् ।
सोमवारे तु धौरेयं कुक्कुटं जलसङ्ख्यया ॥ ११४० ॥

सलिलस्याढकं यावन्नाडी रन्ध्रेण संश्रयेत् ।
मुख्यं तु योधयेत्तावत्तदर्धेनाग्रयोधिनम् ॥ ४१ ॥

द्वितीये सोमवारे स्यादाढकाद्वितयं ततः ।
योधयेदाढकन्त्वेकं द्वौ प्रस्थौ[5] विनिवारयेत् ॥ ४२ ॥

पुनः प्रस्थ[6]द्वयं यावद्योधयेत्कुक्कुटौ मिथः ।
तँ[7]द्वत्कुक्कुटमानार्थं[8] योधयेदग्रयोधि[9]नम् ॥ ४३ ॥

तृतीये सोमवारे स्यादाढकत्रितयं जलम् ।
योधयेदाढकं त्वेकं द्वौ प्रस्थौ विनिवारयेत् ॥ ४४ ॥

पुनरप्याढकं युद्धं प्रस्थमेकं निवारयेत् ।
अवशिष्टं पुनः प्रस्थं योधयेच्चरणायुधम् ॥ ४५ ॥

एवं द्वादशरात्रेषु नीरमानं प्रकल्पयेत् ।
ध्वजयष्टिं तु गृह्णीयुं[10]ः सम्प्राप्ते[11]विजया बलात् ॥ ४६ ॥

अनेनैव प्रकारेण पञ्च सोमस्य वासरान् ।
योधयेत्कुक्कुटान् राजा पुं[12]रयोधिभिरन्वितान् ॥ ४७ ॥

षष्ठे वारे तु सम्प्राप्ते कुलायं परिमण्डयेत् ।
वस्त्रैः काञ्चनपट्टैश्च पट्टिकामाल्यकैरपि ॥ ४८ ॥

पराजितस्ततः पूर्वं वर्णमाख्याय निक्षिपेत् ।
कुलाये कुक्कुटं प्रातरन्यैरप्राप्तदर्शनम् ॥ ४९ ॥

१ A न । २ A र्णे । ३ A स्यां । ४ D मिथ । ५ A स्तौ । ६ A च्छाद । ७ A ध्वजक ।
८ A र्धं । ९ A जि । १० A याव । ११ A प्ते । १२ D पुनरर्चाभिरर्चितान् ।

बलवान्निक्षिपेत्पश्चात्कुक्कुटं जयशंसिनम्[1] ।
न विलम्बं प्रकुर्वीत मासार्धादधिकं क्वचित् ॥ ११५० ॥

निम्बपत्रमपामार्गं सूर्यपत्र(त्रं)ससर्षपम् ।
बदरीवटपत्रं च ब्रह्मदण्डि[3]समन्वितम् ॥ ५१ ॥

बन्धनीयं कुलायाग्रे रक्षार्थं परि[4]कर्मणे ।
रजकावटतोयेन सेचनीयौ कुलायकौ ॥ ५२ ॥

नानाविधफलैः पुष्पैर्नानापक्वान्नवस्त्रकैः ।
मण्डयेत्तं[6] यथाभागमासमन्ता[7]न्मनोहरम् ॥ ५३ ॥

कुलाये मण्डिते सम्यक् करिणीमधिरोपयेत् ।
उषिता नर्तकाः सर्वे नृत्यन्तो यान्ति ते पुरः ॥ ५४ ॥

किरन्तः पुष्पवर्षाणि कुर्वन्तः सिंहगर्जितम् ।
महता तूर्यघोषेण पूरयन्तो दिगन्तरम् ॥ ५५ ॥

विभूत्या परया युक्ताः पक्षद्वितयवेदिनः ।
प्रविशेयुः खलं[8] सर्वे पराजितपुरःसरम्(राः) ॥ ५६ ॥

ताम्बूलं चन्दनं पुष्पं वस्त्राण्याभरणानि च ।
यथायोग्यं प्रयच्छन्तो[10] मानयन्तः परस्परम् ॥ ५७ ॥

नीडयोः स्थितयोः पूर्वं मण्डितौ तौ कुलाय[11]कौ ।
न्यसेन्नृपतिशोभार्थं स्वे स्वे पक्षं(क्षे) निजं निजम् ॥ ५८ ॥

पुरा जिताः कुलायस्[12]या(स्थाः) [13]परिमार्ज्य पुरोऽङ्[14]गणम् ।
पृष्ठतस्तूर्यनादेन समुत्पाद्यं[15](द्य)कुलायकम् ॥ ५९ ॥

वीक्षेरन्कुक्कुटं तज्ज्ञा जयाय जयसूचकम् ।
कुक्कुटाभिमुखो भूत्वा यदि तिष्ठति कुक्कुटः ॥ ११६० ॥

न निस्सरति नीडाद्वा[16] तिष्ठन्नापि पराङ्मुखः ।
भवेत्सङ्कुचितग्रीवो निर्दिशेत्स पराभवम् ॥ ६१ ॥

---

१ D नः । २ A सार्धाधि । ३ D ण्डी । ४ A र । ५ A खलमण्डपिकां पुष्पैः फलैः । ६ A तां तथा ७ A नन्ता । ८ A D र । ९ D ले । D १० न्त्या । ११ A कैः । १२ D स्याः । १३ A परमार्जा । १४ D ग । १५ A द्य । १६ A द्यस्ति ।

भूमिं विलिख्य तिष्ठेद्वा [1]अखिलानाह्वयन्ति(येत) वा।
प्रदक्षिणमुपावृत्य निःसरन् विजयी भवेत् ॥ ६२ ॥

कुक्कुटे निर्गते नीडाद्वा(दा)रे कुर्यात्सुतेजिते।
क्रमोऽयं प्रतिपक्षेऽपि शेषं कुर्वीत पूर्ववत् ॥ ६३ ॥

योधयेत्पूर्ववत्तौ तु पूर्ववच्च जयाजयौ।
हसनं खेलनं गीतं सर्वं पूर्ववदाचरेत् ॥ ६४ ॥

युद्धेरन्[2]कैन्दुकैः [3]पुष्पैः पक्षिणोर्युध्यमानयोः।
हरिचन्दननीरैश्च सिञ्चेयुर्जलयन्त्रकैः ॥ ६५ ॥

कुक्कुटा[4]कारमुद्राभिः कुङ्कुमा[5]ङ्काभिरङ्कयेत्।
पराजितं जयोपेतो ललाटे दोष्णि वक्षसि ॥ ६६ ॥

एकादशस्तथा वारो नान्दीमुख इति स्मृतः।
द्वाद[6]शः कृत्तिकट्टाख्यस्तत्राप्येवं विभूतयः ॥ ६७ ॥

तत ऊर्ध्वं न युद्धं स्यात्कुक्कुटानां कथञ्चन।
कुक्कुटानां विनोदोयं कथितः सोमभूभुजा ॥ ६८ ॥
शृङ्गारवीररौद्राश्च कृता(करुणा)द्भुतभयानकाः।
बीभत्सहास्यसंयुक्ता रसाः स्युः कुक्कुटाहवे ॥ ६९ ॥

[7]कृकवाकुविनोदोऽयं वर्णितः सोमभूभुजा।

इति कुक्कुटविनोदः ॥ ७ ॥

इदानीं कथ्यते कोऽपि विनोदो लावकाश्रयः ॥ ११७० ॥

कच्छे[8]र्लः [9]खारडीकश्च गोरञ्जो विगरै[10]स्तथा।
पांसुला[11]श्वे(लोवे)रसश्वेताः षट् स्युर्लावकजातयः ॥ ७१ ॥

क[12]च्छमण्डलसम्भूता कच्छेला[13]ः परिकीर्तिताः।
[14]तद्देश्यास्तु गृहोत्पन्नाः खारडीका भवन्ति ते ॥ ७२ ॥

वि[15]न्ध्ये सह्ये च सम्भूता लावकाः शोणमस्तकाः।
[16]गेरञ्जा इति विख्याता युद्धकर्मणि मध्यमाः ॥ ७३ ॥

१ D महिलां चा। २ A त्क। ३ D पु। ४ A ङ्का, को। ५ D ङ्कादि। ६ A श कृत्तिकादा। ७ D adds this line। ८ D छे। ९ D का। १० D लः। ११ A D लो श्वेतस्काश्च। १२ D छ। १३ D छे। १४ A द्वत्स्या। १५ A न्ध्य। १६ D गौ।

